# संस्कृतपद्यावलिः

# SELECTIONS FROM SANSKRIT POETRY

## WITH BRIEF NOTES

BY

**PANDURANG VAMAN KANE, M. A., LL. M.**

*Zala Vedant Prizeman ; Mandlik Gold Medallist ; Sometime Professor of Sanskrit, Elphinstone College, Bombay.*

MACMILLAN AND CO., LIMITED

BOMBAY, CALCUTTA, MADRAS AND LONDON

 1934 [ Price : Re. 1-0-0

# PREFACE

THE cordial welcome extended to my Sanskṛitagadyāvali by the student world has encouraged me to bring out the present work, which is a sequel to the former. The Sanskṛitapadyāvali has been compiled almost on the same lines as the Sanskṛitagadyāvali. It is divided into two parts and contains altogether over forty passages in verse ( with the exception of a few pieces taken from dramatic works which contain both prose and verse ) selected from the Rāmāyaṇa, the Mahābhārata, the Raghuvaṁśa and other standard Sanskrit works. In the Sanskṛitgadyāvali I put in here and there my own words and expressions; but in this book I have preserved the originals intact. The only liberty I have allowed myself is that I omit whole verses where they are not necessary for preserving the thread of the narrative or the continuity of the description. An objection was raised in certain quarters that in the Sanskṛitgadyāvali the element of the supernatural is too prominent. In this book it has been my endeavour to keep in the background the fantastic or the preternatural and to bring to the fore what is realistic and rational. With this object in view many descriptive and historical passages have been inserted. The book also contains a number of passages which, by example as well as by precept, inculcate morality, the value of which is greatly heightened by the fact that it emanates from personages held in the highest reverence throughout India. As the book is intended to fall into the hands of students about 15 or 16 years old, I have carefully avoided all glowing descriptions of youthful love. A special feature of the book is that at the end of each part parallel passages on various subjects have been given together with the names of the authors wherever possible. The passages have been arranged

according to difficulty, the easier ones being placed at the beginning of each part. The book is mainly designed for the use of Matriculation and S. F. students. The first twenty pages in each part may with advantage be read even in the 6th standard. Although I steadily keep in view the requirements of Matriculation and S. F. students as outlined in the Schedule (D), issued by the Department of Public Instruction, laying down standards for Anglo-vernacular schools, I have included, for the benefit of those who wish to make a sounder study of Sanskrit Literature, a few passages that are beyond the reach of ordinary students.

For the benefit of students reading privately brief notes have been added at the end. They explain allusions, difficulties of construction and peculiarities of grammar. The meanings of difficult words are sometimes given.

In conclusion I hope that the book will be of use to students and teachers alike and that it will be received as heartily as its companion. I shall most thankfully receive all suggestions and criticisms. I cannot conclude this preface without sincerely thanking the Proprietor of the Nirṇaya-sāgar Press for promptly and carefully carrying the work through the press.

Angre's Wadi,<br>Girgaon Back Road,<br>Bombay.<br>*1st October 1916.*

P. V. KANE.

## Preface to the Second Edition

This edition is a mere reprint of the first with the exception of a few corrections and additions.

# TABLE OF CONTENTS

—0—

## Part First

No. PAGE.

## Part Second

# संस्कृतपद्यावलिः

## PART FIRST

### I

### A CUNNING JACKAL

शृणु राजन् यथा वृत्तं वने निवसतः पुरा ।
जम्बुकस्य महाराज नीतिशास्त्रार्थदर्शिनः ॥ १

अथ कश्चित्कृतप्रज्ञः शृगालः स्वार्थपण्डितः ।
सखिभिर्न्यवसत्सार्धं व्याघ्राखुवृकबभ्रुभिः ॥ २

तेऽपश्यन्विपिने तस्मिन्बलिनं मृगयूथपम् ।
अशक्ता ग्रहणे तस्य ततो मन्त्रममन्त्रयन् ॥ ३

**जम्बुक उवाच ।**

असकृद्यतितो ह्येष हन्तुं व्याघ्र वने त्वया ।
युवा वै जवसम्पन्नो बुद्धिशाली न शक्यते ॥ ४

मूषिकोऽस्य शयानस्य चरणौ भक्षयत्वयम् ।
अथैनं भक्षितैः पादैर्व्याघ्रो गृह्णातु वै ततः ॥ ५

ततो वै भक्षयिष्यामः सर्वे मुदितमानसाः ।
जम्बुकस्य तु तद्वाक्यं तथा चक्रुः समाहिताः ॥ ६

मूषिकाभक्षितैः पादैर्मृगं व्याघ्रोऽवधीत्तदा ।
दृष्ट्वैवाचेष्टमानं तु भूमौ मृगकलेवरम् ॥ ७

स्नात्वाऽऽगच्छत भद्रं वो रक्षामीत्याह जम्बुकः ॥ ८

शृगालवचनात्तेऽपि गताः सर्वे नदीं ततः ।
स चिन्तापरमो भूत्वा तस्थौ तत्रैव जम्बुकः ॥ ९

अथाजगाम पूर्वं तु स्नात्वा व्याघ्रो महाबलः ।
ददर्श जम्बुकं चैव चिन्ताकुलितमानसम् ॥ १०

**व्याघ्र उवाच ।**

किं शोचसि महाप्राज्ञ त्वं नो बुद्धिमतां वरः ।
अशित्वा पिशितान्यद्य विहरिष्यामहे वयम् ॥ ११

**जम्बुक उवाच ।**

शृणु मे त्वं महाबाहो यद्वाक्यं मूषिकोऽब्रवीत् ।
धिग्बलं मृगराजस्य मयाद्यायं मृगो हतः ॥ १२

मद्बाहुबलमाश्रित्य तृप्तिमद्य गमिष्यति ।
तस्यैवं गर्जितं श्रुत्वा ततो भक्ष्यं न रोचये ॥ १३

**व्याघ्र उवाच ।**

ब्रवीति यदि स ह्येवं काले ह्यस्मि प्रबोधितः ।
स्वबाहुबलमाश्रित्य हनिष्येऽहं वनेचरान् ॥ १४

खादिष्ये तत्र मांसानि इत्युक्त्वा प्रस्थितो वनम् ।
एतस्मिन्नेव काले तु मूषिकोऽप्याजगाम ह ॥ १५

तमागतमभिप्रेक्ष्य शृगालोऽप्यब्रवीद्वचः ।
शृणु मूषिक भद्रं ते नकुलो यदिहाब्रवीत् ॥ १६

मृगमांसं न खादेयं गरमेतन्न रोचते ।
मूषिकं भक्षयिष्यामि तद्भवाननुमन्यताम् ॥ १७

तच्छ्रुत्वा मूषिको वाक्यं संत्रस्तः प्रगतो बिलम् ।
ततः स्नात्वा स वै तत्र आजगाम वृको नृप ॥ १८

तमागतमिदं वाक्यमब्रवीज्जम्बुकस्तदा ।
मृगराजो हि संक्रुद्धो न ते साधु भविष्यति ॥ १९

सकलत्रस्त्विहायाति कुरुष्व यदनन्तरम् ।
एवं संचोदितस्तेन जम्बुकेन तदा वृकः ॥ २०

ततोऽवलुम्पनं कृत्वा प्रयातः पिशिताशनः ।
एतस्मिन्नेव काले तु नकुलोऽप्याजगाम ह ॥ २१

तमुवाच महाराज नकुलं जम्बुको वने ।
स्वबाहुबलमाश्रित्य निर्जितास्तेन्यतो गताः ॥ २२

मम दत्त्वा नियुद्धं त्वं भुङ्क्ष्व मांसं यथेप्सितम् ।

**नकुल उवाच ।**

मृगराजो वृकश्चैव बुद्धिमानपि मूषिकः ॥ २३

निर्जिता यत्त्वया वीरास्तस्माद्वीरतरो भवान् ।
न त्वयाप्युत्सहे योद्धुमित्युक्त्वा सोऽप्यपागमत् ॥ २४

एवं तेषु प्रयातेषु जम्बुको हृष्टमानसः ।
खादति स्म तदा मांसमेकः सन्मन्त्रनिश्चयात् ॥ २५

एवं समाचरन्नित्यं सुखमेधेत भूपतिः ॥ २६

भयेन भेदयेद्भीरुं शूरमञ्जलिकर्मणा ।
लुब्धमर्थप्रदानेन समं न्यूनं तथौजसा ॥ २७

Mahābhārata–Ādiparva.

# II

## VASISHṬHA AND VIS'VĀMITRA

कान्यकुब्जे महानासीत्पार्थिवो भरतर्षभ ।
गाधीति विश्रुतो लोके कुशिकस्यात्मसम्भवः ॥ १

तस्य धर्मात्मनः पुत्रः समृद्धबलवाहनः ।
विश्वामित्र इति ख्यातो बभूव रिपुमर्दनः ॥ २

स चचार सहामात्यो मृगयां गहने वने ।
मृगान्विध्यन्वराहांश्च रम्येषु मरुधन्वसु ॥ ३

व्यायामकर्शितः सोऽथ मृगलिप्सुः पिपासितः ।
आजगाम नरश्रेष्ठ वसिष्ठस्याश्रमं प्रति ॥ ४

तमागतमभिप्रेक्ष्य वसिष्ठः श्रेष्ठभागृषिः ।
विश्वामित्रं नरश्रेष्ठं प्रतिजग्राह पूजया ॥ ५

पाद्यार्घ्याचमनीयैस्तं स्वागतेन च भारत ।
तथैव परिजग्राह वन्येन हविषा तदा ॥ ६

तस्याथ कामधुग्धेनुर्वसिष्ठस्य महात्मनः ।
उक्ता कामान्प्रयच्छेति सा कामान्दुदुहे ततः ॥ ७

ब्राष्पाढ्यस्यौदनस्यैव राशयः पर्वतोपमाः ।
निष्ठानानि च सूपांश्च दधिकुल्यास्तथैव च ॥ ८

कूपांश्च घृतसंपूर्णान्गौड्यान्नानि सहस्रशः ।
इक्षून्मधूनि लाजांश्च मैरेयांश्च वरासवान् ॥ ९

ग्राम्यारण्याश्चौषधीश्च दुदुहे पय एव च ।
षड्रसं चामृतनिभं रसायनमनुत्तमम् ॥ १०

रत्नानि च महार्हाणि वासांसि विविधानि च ।
तैः कामैः सर्वसम्पूर्णैः पूजितश्च महीपतिः ॥ ११
सामात्यः सबलश्चैव तुतोष स भृशं तदा ।
सुवालधिं शङ्कुकर्णां चारुशृङ्गां मनोरमाम् ॥ १२
पुष्टायतशिरोग्रीवां विस्मितः सोऽभिवीक्ष्य ताम् ।
अभिनन्द्य स तां राजा नन्दिनीं गाधिनन्दनः ॥ १३
अब्रवीच्च भृशं तुष्टः स राजा तमृषिं तदा ।
अर्बुदेन गवां ब्रह्मन् मम राज्येन वा पुनः ॥ १४
नन्दिनीं संप्रयच्छस्व भुङ्क्ष्व राज्यं महामुने ।

**वसिष्ठ उवाच ।**

देवतातिथिपित्रर्थं याज्यार्थं च पयस्विनी ॥ १५
अदेया नन्दिनीयं वै राज्येनापि तवानघ ।

**विश्वामित्र उवाच ।**

रत्नं हि भगवन्नेतद्रत्नहारी च पार्थिवः ।
क्षत्रियोहं भवान्विप्रस्तपःस्वाध्यायसाधनः ॥ १६
ब्राह्मणेषु कुतो वीर्यं प्रशान्तेषु धृतात्मसु ।
अर्बुदेन गवां यस्त्वं न ददासि ममेप्सितम् ॥ १७
स्वधर्मं न प्रहास्यामि नेष्यामि च बलेन गाम् ।

**वसिष्ठ उवाच ।**

बलस्थश्चासि राजा च बाहुवीर्यश्च क्षत्रियः ।
यथेच्छसि तथा क्षिप्रं कुरु मा त्वं विचारय ॥ १८
एवमुक्तस्तथा पार्थ विश्वामित्रो बलादिव ।
हंसचन्द्रप्रतीकाशां नन्दिनीं तां जहार गाम् ॥ १९

सा तदा ह्रियमाणा च विश्वामित्रबलैर्बलात् ।
कशादण्डप्रणुदिता काल्यमाना इतस्ततः ॥ २०
हम्भायमाना कल्याणी वसिष्ठस्याथ नन्दिनी ।
आगम्याभिमुखी पार्थ तस्थौ भगवदुन्मुखी ॥ २१
भृशं च ताड्यमाना वै न जगामाश्रमात्ततः ।

**वसिष्ठ उवाच ।**

शृणोमि ते रवं भद्रे विनदन्त्याः पुनःपुनः ॥ २२
ह्रियसे त्वं बलाद्भद्रे विश्वामित्रेण नन्दिनी ।
किं कर्तव्यं मया तत्र क्षमावान्ब्राह्मणो ह्यहम् ॥ २३
सा भयान्नन्दिनी तेषां बलानां भरतर्षभ ।
विश्वामित्रभयोद्विग्ना वसिष्ठं समुपागमत् ॥ २४

**गौरुवाच ।**

कशाग्रदण्डाभिहतां क्रोशन्तीं मामनाथवत् ।
विश्वामित्रबलैर्घोरैर्भगवन् किमुपेक्षसे ॥ २५
एवं तस्यां तदा पार्थ धर्षितायां महामुनिः ।
न चुक्षुभे तदा धैर्यान्न चचाल धृतव्रतः ॥ २६

**वसिष्ठ उवाच ।**

क्षत्रियाणां बलं तेजो ब्राह्मणानां क्षमा बलम् ।
क्षमा मां भजते यस्माद्गम्यतां यदि रोचते ॥ २७

**नन्दिन्युवाच ।**

किं नु त्यक्ताऽस्मि भगवन्यदेवं त्वं प्रभाषसे ।
अत्यक्ताऽहं त्वया ब्रह्मन्नेतुं शक्या न वै बलात् ॥ २८

**वसिष्ठ उवाच ।**

न त्वां त्यजामि कल्याणि स्थीयतां यदि शक्यते ।
दृढेन दाम्ना बद्धैष वत्सस्ते ह्रियते बलात् ॥ २९

**गन्धर्व उवाच ।**

स्थीयतामिति तच्छ्रुत्वा वसिष्ठस्य पयस्विनी ।
ऊर्ध्वाञ्चितशिरोग्रीवा प्रबभौ रौद्रदर्शना ॥ ३०

क्रोधरक्तेक्षणा सा गौर्हम्भारवघनस्वना ।
विश्वामित्रस्य तत्सैन्यं व्यद्रावयत सर्वशः ॥ ३१

आदित्य इव मध्याह्ने क्रोधदीप्तवपुर्बभौ ।
अङ्गारवर्षं मुञ्चन्ती मुहुर्वालधितो महत् ॥ ३२

चिबुकांश्च पुलिन्दांश्च चीनान्हूणान् सकेरलान् ।
ससर्ज फेनतः सा गौर्म्लेच्छान्बहुविधानपि ॥ ३३

तैर्विसृष्टैर्महासैन्यैर्नानाम्लेच्छगणैस्तदा ।
नानावरणसंच्छन्नैर्नानायुधधरैस्तथा ॥ ३४

अवाकीर्यत संरब्धैर्विश्वामित्रस्य पश्यतः ।
अस्त्रवर्षेण महता वध्यमानं बलं तदा ॥ ३५

विश्वामित्रस्ततो दृष्ट्वा क्रोधाविष्टः स रोदसी ।
ववर्ष शरवर्षाणि वसिष्ठे मुनिसत्तमे ॥ ३६

घोररूपांश्च नाराचान्क्षुरान्भल्लान् महामुनिः ।
विश्वामित्रप्रयुक्तांस्तान्वैणवेन व्यमोचयत् ॥ ३७

अपोह्य दिव्यान्यस्त्राणि वसिष्ठो वाक्यमब्रवीत् ।
निर्जितोऽसि महाराज दुरात्मन्गाधिनन्दन ॥ ३८

यदि तेऽस्ति परं शौर्यं तद्दर्शय मयि स्थिते ।
विश्वामित्रस्तथा चोक्तो वसिष्ठेन नराधिपः ॥ ३९

नोवाच किंचिद्व्रीडाढ्यो विद्रावितमहाबलः ।
दृष्ट्वा तन्महदाश्चर्यं ब्रह्मतेजोभवं तदा ॥ ४०
विश्वामित्रः क्षत्रभावान्निर्विण्णो वाक्यमब्रवीत् ।
धिग्बलं क्षत्रियबलं ब्रह्मतेजोबलं बलम् ॥ ४१
बलाबले विनिश्चित्य तप एव परं बलम् ।
स राज्यं स्फीतमुत्सृज्य तां च दीप्तां नृपश्रियम् ॥ ४२
भोगांश्च पृष्ठतः कृत्वा तपस्येव मनो दधे ।

Mahābhārata–Ādiparva.

---

## III

## KING DAS'ARATHA ADDRESSES A MEETING OF HIS SUBJECTS CONCERNING THE INSTALLATION OF RĀMA AS HEIR-APPARENT

ततः परिषदं सर्वामामन्त्र्य वसुधाधिपः ।
हितमुद्धर्षणं चैवमुवाच प्रथितं वचः ॥ १
दुन्दुभिस्वनकल्पेन गम्भीरेणानुनादिना ।
स्वरेण महता राजा जीमूत इव नादयन् ॥ २
राजलक्षणयुक्तेन कान्तेनानुपमेन च ।
उवाच रसयुक्तेन स्वरेण नृपतिर्नृपान् ॥ ३
विदितं भवतामेतद्यथा मे राज्यमुत्तमम् ।
पूर्वकैर्मम राजेन्द्रैः सुतवत्परिपालितम् ॥ ४
सोऽहमिक्ष्वाकुभिः सर्वैर्नरेन्द्रैः परिपालितम् ।
श्रेयसा योक्तुकामोऽस्मि सुखार्हमखिलं जगत् ॥ ५

मयाप्याचरितं पूर्वैः पन्थानमनुगच्छता ।
प्रजा नित्यमनिद्रेण यथाशक्त्यभिरक्षिताः ॥ ६

इदं शरीरं कृत्स्नस्य लोकस्य चरता हितम् ।
पाण्डुरस्यातपत्रस्य छायायां जरितं मया ॥ ७

प्राप्य वर्षसहस्राणि बहून्यायूंषि जीवतः ।
जीर्णस्यास्य शरीरस्य विश्रान्तिमभिरोचये ॥ ८

राजप्रभावजुष्टां हि दुर्वहामजितेन्द्रियैः ।
परिश्रान्तोऽस्मि लोकस्य गुर्वीं धर्मधुरां वहन् ॥ ९

सोऽहं विश्रममिच्छामि पुत्रं कृत्वा प्रजाहिते ।
सन्निकृष्टानिमान्सर्वाननुमान्य द्विजर्षभान् ॥ १०

अनुजातो हि मां सर्वैर्गुणैर्ज्येष्ठो ममात्मजः ।
पुरन्दरसमो वीर्ये रामः परपुरञ्जयः ॥ ११

तं चन्द्रमिव पुष्येण युक्तं धर्मभृतां वरम् ।
यौवराज्ये नियोक्तास्मि प्रीतः पुरुषपुङ्गवम् ॥ १२

अनुरूपः स वै नाथो लक्ष्मीवाँल्लक्ष्मणाग्रजः ।
त्रैलोक्यमपि नाथेन येन स्यान्नाथवत्तरम् ॥ १३

अनेन श्रेयसा सद्यः संयोज्यैवमिमां महीम् ।
गतक्लेशो भविष्यामि सुते तस्मिन्निवेश्य वै ॥ १४

यदीदं मेऽनुरूपार्थं मया साधु सुमन्त्रितम् ।
भवन्तो मेऽनुमन्यन्तां कथं वा करवाण्यहम् ॥ १५

यद्यप्येषा मम प्रीतिर्हितमन्यद्विचिन्त्यताम् ।
अन्या मध्यस्थचिन्ता हि विमर्दाभ्यधिकोदया ॥ १६

इति ब्रुवन्तं मुदिताः प्रत्यनन्दन्नृपा नृपम् ।
वृष्टिमन्तं महामेघं नर्दन्त इव बर्हिणः ॥ १७

स्निग्धोऽनुनादी सञ्जज्ञे तत्र हर्षसमीरितः ।
जनौघोद्घुष्टसन्नादो विमानं कम्पयन्निव ॥ १८

तस्य धर्मार्थविदुषो भावमाज्ञाय सर्वशः ।
ब्राह्मणा जनमुख्याश्च पौरजानपदैः सह ॥ १९

समेत्य मन्त्रयित्वा तु समतां गतबुद्धयः ।
ऊचुश्च मनसा ज्ञात्वा वृद्धं दशरथं नृपम् ॥ २०

अनेकवर्षसाहस्रो वृद्धस्त्वमसि पार्थिव ।
स रामं युवराजानमभिषिञ्चस्व पार्थिवम् ॥ २१

इच्छामो हि महाबाहुं रघुवीरं महाबलम् ।
गजेन महता यान्तं रामं छत्रावृताननम् ॥ २२

इति तद्वचनं श्रुत्वा राजा तेषां मनःप्रियम् ।
अजानन्निव जिज्ञासुरिदं वचनमब्रवीत् ॥ २३

श्रुत्वैव वचनं यन्मे राघवं पतिमिच्छथ ।
राजानः संशयोऽयं मे किमिदं ब्रूत तत्त्वतः ॥ २४

कथं नु मयि धर्मेण पृथिवीमनुशासति ।
भवन्तो द्रष्टुमिच्छन्ति युवराजं ममात्मजम् ॥ २५

ते तमूचुर्महात्मानं पौरजानपदैः सह ।
बहवो नृप कल्याणा गुणाः पुत्रस्य सन्ति ते ॥ २६

गुणान्गुणवतो देव देवकल्पस्य धीमतः ।
प्रियानानन्दनान्कृत्स्नान्प्रवक्ष्यामोऽद्य ताञ्छृणु ॥ २७

दिव्यैर्गुणैः शक्रसमो रामः सत्यपराक्रमः ।
इक्ष्वाकुभ्योऽपि सर्वेभ्यो ह्यतिरिक्तो विशांपते ॥ २८

प्रजासुखत्वे चन्द्रस्य वसुधायाः क्षमागुणैः ।
बुद्ध्या बृहस्पतेस्तुल्यो वीर्ये साक्षाच्छचीपतेः ॥ २९

धर्मज्ञः सत्यसन्धश्च शीलवाननसूयकः ।
क्षान्तः सान्त्वयिता श्लक्ष्णः कृतज्ञो विजितेन्द्रियः ॥ ३०

यदा व्रजति सङ्ग्रामं ग्रामार्थे नगरस्य वा ।
गत्वा सौमित्रिसहितो नाविजित्य निवर्तते ॥ ३१

सङ्ग्रामात्पुनरागम्य कुञ्जरेण रथेन वा ।
पौरान्स्वजनवन्नित्यं कुशलं परिपृच्छति ॥ ३२

व्यसनेषु मनुष्याणां भृशं भवति दुःखितः ।
उत्सवेषु च सर्वेषु पितेव परितुष्यति ॥ ३३

सुभ्रूरायतताम्राक्षः साक्षाद्विष्णुरिव स्वयम् ।
रामो लोकाभिरामोऽयं शौर्यवीर्यपराक्रमैः ॥ ३४

तमेवंगुणसम्पन्नं रामं सत्यपराक्रमम् ।
लोकपालोपमं नाथमकामयत मेदिनी ॥ ३५

वलमारोग्यमायुश्च रामस्य विदितात्मनः ।
आशंसते जनः सर्वो राष्ट्रे पुरवरे तथा ॥ ३६

स्त्रियो वृद्धास्तरुण्यश्च सायं प्रातः समाहिताः ।
सर्वान्देवान्नमस्यन्ति रामस्यार्थे यशस्विनः ॥ ३७

तं देवदेवोपममात्मजं ते सर्वस्य लोकस्य हिते निविष्टम् ।
हिताय नः क्षिप्रमुदारजुष्टं मुदाभिषेक्तुं वरद त्वमर्हसि ॥ ३८

तेषामञ्जलिपद्मानि प्रगृहीतानि सर्वशः ।
प्रतिगृह्याब्रवीद्राजा तेभ्यः प्रियहितं वचः ॥ ३९

अहोऽस्मि परमप्रीतः प्रभावश्चातुलो मम ।
यन्मे ज्येष्ठं प्रियं पुत्रं यौवराज्यस्थमिच्छथ ॥ ४०

राज्ञस्तूपरते वाक्ये जनघोषो महानभूत् ।

Rāmāyaṇa–Ayodhyākāṇḍa.

---

# IV

## RĀVAṆA PEREMPTORILY COMMANDS MĀRICHA TO ASSUME THE FORM OF A DEER IN SPITE OF THE LATTER'S PROTESTS

मारीचेन तु तद्वाक्यं क्षमं युक्तं निशाचरः ।
उक्तो न प्रतिजग्राह मर्तुकाम इवौषधम् ॥ १

तं पथ्यहितवक्तारं मारीचं राक्षसाधिपः ।
अब्रवीत्परुषं वाक्यमयुक्तं कालचोदितः ॥ २

यत्किलैतदयुक्तार्थं मारीच मयि कथ्यते ।
वाक्यं निष्फलमत्यर्थमुप्तं बीजमिवोषरे ॥ ३

यस्त्यक्त्वा सुहृदो राज्यं मातरं पितरं तथा ।
स्त्रीवाक्यं प्राकृतं श्रुत्वा वनमेकपदे गतः ॥ ४

अवश्यं तु मया तस्य संयुगे खरघातिनः ।
प्राणैः प्रियतरा सीता हर्तव्या तव सन्निधौ ॥ ५

एवं मे निश्चिता बुद्धिर्हृदि मारीच वर्तते ।
न व्यावर्तयितुं शक्या सेन्द्रैरपि सुरासुरैः ॥ ६

दोषं गुणं वा संपृष्टस्त्वमेवं वक्तुमर्हसि ।
अपायं वाप्युपायं वा कार्यस्यास्य विनिश्चये ॥ ७

संपृष्टेन तु वक्तव्यं सचिवेन विपश्चिता ।
उद्यताञ्जलिना राज्ञे य इच्छेद्भूतिमात्मनः ॥ ८

वाक्यमप्रतिकूलं तु मृदुपूर्वं हितं शुभम् ।
उपचारेण युक्तं च वक्तव्यो वसुधाधिपः ॥ ९

सावमर्दं तु यद्वाक्यं मारीच हितमुच्यते ।
नाभिनन्दति तद्राजा मानार्हो मानवर्जितम् ॥ १०

पञ्च रूपाणि राजानो धारयन्त्यमितौजसः ।
अग्नेरिन्द्रस्य सोमस्य वरुणस्य यमस्य च ॥ ११

औष्ण्यं तथा विक्रमं च सौम्यं दण्डं प्रसन्नताम् ।
धारयन्ति महात्मानो राजानः क्षणदाचर ॥ १२

तस्मात्सर्वास्ववस्थासु मान्याः पूज्याश्च पार्थिवाः ॥ १३

त्वं तु धर्ममविज्ञाय केवलं मोहमास्थितः ।
अभ्यागतं मां दौरात्म्यात्परुषं वक्तुमिच्छसि ॥ १४

गुणदोषौ न पृच्छामि क्षमं चात्मनि राक्षस ।
मयोक्तं तव चैतावत्संप्रत्यमितविक्रम ॥ १५

अस्मिंस्तु त्वं महाकृत्ये साहाय्यं कर्तुमर्हसि ।
शृणु तत्कर्म साहाय्ये यत्कार्यं वचनान्मम ॥ १६

सौवर्णस्त्वं मृगो भूत्वा चित्रो रजतबिन्दुभिः ।
आश्रमे तस्य रामस्य सीतायाः प्रमुखे चर ॥ १७

त्वां तु मायामृगं दृष्ट्वा काञ्चनं जातविस्मया ।
आनयैनमिति क्षिप्रं रामं वक्ष्यति मैथिली ॥ १८

अपक्रान्ते तु काकुत्स्थे दूरं यात्वा व्युदाहर ।
हा सीते लक्ष्मणेत्येवं रामवाक्यानुरूपकम् ॥ १९

तच्छ्रुत्वा रामपदवीं सीतया च प्रचोदितः ।
अनुगच्छति सम्भ्रान्तः सौमित्रिरपि सौहृदात् ॥ २०

अपक्रान्ते च काकुत्स्थे लक्ष्मणे च यथासुखम् ।
आनयिष्यामि वैदेहीं सहस्राक्षः शचीमिव ॥ २१

एवं कृत्वा त्विदं कार्यं यथेष्टं गच्छ राक्षस ।
राज्यस्यार्धं प्रयच्छामि मारीच तव सुव्रत ॥ २२
गच्छ सौम्य शिवं मार्गं कार्यस्यास्य विवृद्धये ।
अहं त्वाऽनुगमिष्यामि सरथो दण्डकावनम् ॥ २३
प्राप्य सीतामयुद्धेन वञ्चयित्वा तु राघवम् ।
लङ्कां प्रति गमिष्यामि कृतकार्यः सह त्वया ॥ २४
न चेत्करोषि मारीच हन्मि त्वामहद्य वै ।
एतत्कार्यमवश्यं मे बलादपि करिष्यसि ॥ २५
राज्ञो हि प्रतिकूलस्थो न जातु सुखमेधते ॥ २६
आसाद्य तं जीवितसंशयस्ते मृत्युर्ध्रुवो ह्यद्य मया विरुध्य ।
एतद्यथावत्प्रतिगृह्य बुद्ध्या यदत्र पथ्यं कुरु तत्तथा त्वम् ॥ २७

Rāmāyaṇa-Araṇyakāṇḍa.

---

## V

## HANUMĀN FINDS SĪTĀ IN THE AS'OKAVANA

अनेकगन्धप्रवहं पुण्यगन्धं मनोरमम् ।
शैलेन्द्रमिव गन्धाढ्यं द्वितीयं गन्धमादनम् ॥ १
अशोकवनिकायां तु तस्यां वानरपुङ्गवः ।
स ददर्शाविदूरस्थं चैत्यप्रासादमुच्छ्रितम् ॥ २
मध्ये स्तम्भसहस्रेण स्थितं कैलासपाण्डुरम् ।
प्रवालकृतसोपानं तप्तकाञ्चनवेदिकम् ॥ ३
मुष्णन्तमिव चक्षूंषि द्योतमानमिव श्रिया ।
विमलं प्रांशुभावत्वादुल्लिखन्तमिवाम्बरम् ॥ ४

ततो मलिनसंवीतां राक्षसीभिः समावृताम् ।
उपवासकृशां दीनां निःश्वसन्तीं पुनः पुनः ॥ ५

ददर्श शुक्लपक्षादौ चन्द्ररेखामिवामलाम् ।
मन्दं प्रख्यायमानेन रूपेण रुचिरप्रभाम् ॥ ६

पिनद्धां धूमजालेन शिखामिव विभावसोः ।
पीतेनैकेन संवीतां क्लिष्टेनोत्तमवाससा ॥ ७

सपङ्कामनलङ्कारां विपद्मामिव पद्मिनीम् ।
व्रीडितां दुःखसन्तप्तां परिम्लानां तपस्विनीम् ॥ ८

ग्रहेणाङ्गारकेणेव पीडितामिव रोहिणीम् ।
अश्रुपूर्णमुखीं दीनां कृशामनशनेन च ॥ ९

शोकध्यानपरां दीनां नित्यं दुःखपरायणाम् ।
प्रियं जनमपश्यन्तीं पश्यन्तीं राक्षसीगणम् ॥ १०

निःश्वासबहुलां भीरुं भुजगेन्द्रवधूमिव ।
शोकजालेन महता विततेन न राजतीम् ॥ ११

मलपङ्कधरां दीनां नित्यं मण्डनार्हाममण्डिताम् ।
प्रभां नक्षत्रराजस्य कालमेघैरिवावृताम् ॥ १२

तस्य सन्दिदिहे बुद्धिर्मुहुः सीतां निरीक्ष्य तु ।
आम्नायानामयोगेन विद्यां प्रशिथिलामिव ॥ १३

दुःखेन बुबुधे सीतां हनुमाननलंकृताम् ।
संस्कारेण यथा हीनां वाचमर्थान्तरं कृताम् ॥ १४

तां समीक्ष्य विशालाक्षीं राजपुत्रीमनिन्दिताम् ।
तर्कयामास सीतेति कारणैरुपपादिभिः ॥ १५

Rāmāyaṇa–Sundarakāṇḍa.

## VI

## HANUMĀN REPENTS OF HAVING BURNT LAṄKĀ

सन्दीप्यमानां विध्वस्तामस्तरक्षोगणां पुरीम् ।
अवेक्ष्य हनुमाँल्लङ्कां चिन्तयामास वानरः ॥ १

तस्याभूत्सुमहांस्त्रासः कुत्सा चात्मन्यजायत ।
लङ्कां प्रदहता कर्म किंस्वित्कृतमिदं मया ॥ २

धन्यास्ते पुरुषश्रेष्ठा ये बुद्ध्या कोपमुत्थितम् ।
निरुन्धन्ति महात्मानो दीप्तमग्निमिवाम्भसा ॥ ३

क्रुद्धः पापं न कुर्यात्कः क्रुद्धो हन्याद्गुरूनपि ।
क्रुद्धः परुषया वाचा नरः साधूनधिक्षिपेत् ॥ ४

वाच्यावाच्यं प्रकुपितो न विजानाति कर्हिचित् ।
नाकार्यमस्ति क्रुद्धस्य नावाच्यं विद्यते क्वचित् ॥ ५

यः समुत्पतितं क्रोधं क्षमयैव निरस्यति ।
यथोरगस्त्वचं जीर्णां स वै पुरुष उच्यते ॥ ६

धिगस्तु मां सुदुर्बुद्धिं निर्लज्जं पापकृत्तमम् ।
अचिन्तयित्वा तां सीतामग्निदं स्वामिघातकम् ॥ ७

यदि दग्धा त्वियं लङ्का नूनमार्याऽपि जानकी ।
दग्धा तेन मया भर्तुर्हतं कार्यमजानता ॥ ८

यदर्थमयमारम्भस्तत्कार्यमवसादितम् ।
मया हि दहता लङ्कां न सीता परिरक्षिता ॥ ९

ईषत्कार्यमिदं कार्यं कृतमासीन्न संशयः ।
तस्य क्रोधाभिभूतेन मया मूलक्षयः कृतः ॥ १०

विनष्टा जानकी नूनं न ह्यदग्धः प्रदृश्यते ।
लङ्कायां कश्चिदुद्देशः सर्वा भस्मीकृता पुरी ॥ ११

यदि तद्विहतं कार्यं मम प्रज्ञाविपर्ययात् ।
इहैव प्राणसन्न्यासो ममापि ह्यद्य रोचते ॥ १२

किमग्नौ निपताम्यद्य आहोस्विद्वडवामुखे ।
शरीरमाहो सत्त्वानां दद्मि सागरवासिनाम् ॥ १३

कथं हि जीवता शक्यो मया द्रष्टुं हरीश्वरः ।
तौ वा पुरुषशार्दूलौ कार्यसर्वस्वघातिना ॥ १४

मया खलु तदेवेदं रोषदोषात्प्रदर्शितम् ।
प्रथितं त्रिषु लोकेषु कपित्वमनवस्थितम् ॥ १५

धिगस्तु राजसं भावमनीशमनवस्थितम् ।
ईश्वरेणापि यद्रागान्मया सीता न रक्षिता ॥ १६

विनष्टायां तु सीतायां तावुभौ विनशिष्यतः ।
तयोर्विनाशे सुग्रीवः सबन्धुर्विनशिष्यति ॥ १७

एतदेव वचः श्रुत्वा भरतो भ्रातृवत्सलः ।
धर्मात्मा सहशत्रुघ्नः कथं शक्ष्यति जीवितुम् ॥ १८

इक्ष्वाकुवंशे धर्मिष्ठे गते नाशमसंशयम् ।
भविष्यन्ति प्रजाः सर्वाः शोकसन्तापपीडिताः ॥ १९

तदहं भाग्यरहितो लुप्तधर्मार्थसंग्रहः ।
रोषदोषपरीतात्मा व्यक्तं लोकविनाशनः ॥ २०

Rāmāyaṇa–Sundarakāṇḍa.

## VII

## BIBHĪSHAṆA, BEING HARSHLY ABUSED BY RĀVAṆA, DESERTS HIM

सुनिविष्टं हितं वाक्यमुक्तवन्तं विभीषणम् ।
अब्रवीत्परुषं वाक्यं रावणः कालचोदितः ॥ १

वसेत्सह सपत्नेन क्रुद्धेनाशीविषेण वा ।
न तु मित्रप्रवादेन संवसेच्छत्रुसेविना ॥ २

जानामि शीलं ज्ञातीनां सर्वलोकेषु राक्षस ।
हृष्यन्ति व्यसनेष्वेते ज्ञातीनां ज्ञातयः सदा ॥ ३

प्रधानं साधनं वैद्यं धर्मशीलं च राक्षस ।
ज्ञातयो ह्यवमन्यन्ते शूरं परिभवन्ति च ॥ ४

नित्यमन्योन्यसंहृष्टा व्यसनेष्वाततायिनः ।
प्रच्छन्नहृदया घोरा ज्ञातयस्तु भयावहाः ॥ ५

श्रूयन्ते हस्तिभिर्गीताः श्लोकाः पद्मवने क्वचित् ।
पाशहस्तान्नरान्दृष्ट्वा शृणु तान्गदतो मम ॥ ६

नाग्निर्नान्यानि शस्त्राणि न नः पाशा भयावहाः ।
घोराः स्वार्थप्रयुक्तास्तु ज्ञातयो नो भयावहाः ॥ ७

उपायमेते वक्ष्यन्ति ग्रहणे नात्र संशयः ।
कृत्स्नाद्भयाज्ज्ञातिभयं सुकष्टं विदितं च नः ॥ ८

विद्यते गोषु सम्पन्नं विद्यते ब्राह्मणे दमः ।
विद्यते स्त्रीषु चापल्यं विद्यते ज्ञातितो भयम् ॥ ९

ततो नेष्टमिदं सौम्य यदहं लोकसत्कृतः ।
ऐश्वर्यमभिजातश्च रिपूणां मूर्ध्न्यवस्थितः ॥ १०

यथा पुष्करपर्णेषु पतितास्तोयबिन्दवः ।
न श्लेषमुपगच्छन्ति तथाऽनार्येषु सङ्गतम् ॥ ११

यथा मधुकरस्तर्षाद्रसं विन्दन्न विद्यते ।
तथा त्वमपि तत्रैव तथाऽनार्येषु सौहृदम् ॥ १२

यथा पूर्वं गजः स्नात्वा गृह्य हस्तेन वै रजः ।
दूषयत्यात्मनो देहं तथाऽनार्येषु सौहृदम् ॥ १३

अन्यस्त्वेवंविधं ब्रूयाद्वाक्यमेतन्निशाचर ।
अस्मिन्मुहूर्ते न भवेत्त्वां तु धिक्कुलपांसनम् ॥ १४

इत्युक्तः परुषं वाक्यं न्यायवादी विभीषणः ।
उत्पपात गदापाणिश्चतुर्भिः सह राक्षसैः ॥ १५

अब्रवीच्च तदा वाक्यं जातक्रोधो विभीषणः ।
अन्तरिक्षगतः श्रीमान्भ्रातरं राक्षसाधिपम् ॥ १६

ज्येष्ठो मान्यः पितृसमो न च धर्मपथे स्थितः ।
इदं तु परुषं वाक्यं न क्षमाम्यनृतं तव ॥ १७

सुनीतं हितकामेन वाक्यमुक्तं दशानन ।
न गृह्णन्त्यकृतात्मानः कालस्य वशमागताः ॥ १८

सुलभाः पुरुषा राजन्सततं प्रियवादिनः ।
अप्रियस्य तु पथ्यस्य वक्ता श्रोता च दुर्लभः ॥ १९

बद्धं कालस्य पाशेन सर्वभूतापहारिणा ।
न नश्यन्तमुपेक्षेय प्रदीप्तं शरणं यथा ॥ २०

दीप्तपावकसंकाशैः शितैः काञ्चनभूषणैः ।
न त्वामिच्छाम्यहं द्रष्टुं रामेण निहतं शरैः ॥ २१

शूराश्च बलवन्तश्च कृतास्त्राश्च रणाजिरे ।
कालाभिपन्नाः सीदन्ति यथा वालुकसेतवः ॥ २२

तन्मर्षयतु यच्चोक्तं गुरुत्वाद्धितमिच्छता ।
आत्मानं सर्वथा रक्ष पुरीं चेमां सराक्षसाम् ॥ २३

स्वस्ति तेऽस्तु गमिष्यामि सुखी भव मया विना ॥ २४

निवार्यमाणस्य मया हितैषिणा न रोचते ते वचनं निशाचर ।
परीतकाला हि गतायुषो नरा हितं न गृह्णन्ति सुहृद्भिरीरितम् ॥ २५

Rāmāyaṇa–Yudhakāṇḍa.

---

## VIII

## LAKSHMAṆA, AT THE COMMAND OF RĀMA, ABANDONS SĪTĀ IN THE FOREST AND BIDS HER A SORROWFUL FAREWELL

श्रुत्वा परिषदो मध्ये ह्यपवादं सुदारुणम् ।
पुरं जनपदे चैव त्वत्कृते जनकात्मजे ॥ १

रामः सन्तप्तहृदयो मां निवेद्य गृहं गतः ।
न तानि वचनीयानि मया देवि तवाग्रतः ॥ २

यानि राज्ञा हृदि न्यस्तान्यमर्षात्पृष्ठतः कृतः ॥ ३

सा त्वं त्यक्ता नृपतिना निर्दोषा मम सन्निधौ ।
पौरापवादभीतेन ग्राह्यं देवि न तेऽन्यथा ॥ ४

आश्रमान्तेषु च मया त्यक्तव्या त्वं भविष्यसि ।
राज्ञः शासनमादाय तवेदं किल दौर्हृदम् ॥ ५

तदेतज्जाह्नवीतीरे ब्रह्मर्षीणां तपोवनम् ।
पुण्यं च रमणीयं च मा विषादं कृथाः शुभे ॥ ६

राज्ञो दशरथस्येष्टः पितुर्मे मुनिपुङ्गवः ।
सखा परमको विप्रो वाल्मीकिः सुमहायशाः ॥ ७

पादच्छायामुपागम्य सुखमस्य महात्मनः ।
उपवासपरैकाग्रा वस त्वं जनकात्मजे ॥ ८

पतिव्रतात्वमास्थाय रामं कृत्वा सदा हृदि ।
श्रेयस्ते परमं देवि तथा कृत्वा भविष्यति ॥ ९

लक्ष्मणस्य वचः श्रुत्वा दारुणं जनकात्मजा ।
परं विषादमागम्य वैदेही निपपात ह ॥ १०

सा मुहूर्तमिवासंज्ञा बाष्पपर्याकुलेक्षणा ।
लक्ष्मणं दीनया वाचा उवाच जनकात्मजा ॥ ११

मामिकेयं तनुर्नूनं सृष्टा दुःखाय लक्ष्मण ।
धात्रा यस्यास्तथा मेऽद्य दुःखमूर्तिः प्रदृश्यते ॥ १२

किं नु पापं कृतं पूर्वं को वा दारैर्वियोजितः ।
याहं शुद्धसमाचारा त्यक्ता नृपतिना सती ॥ १३

पुराहमाश्रमे वासं रामपादानुवर्तिनी ।
अनुरुध्यापि सौमित्रे दुःखे च परिवर्तिनी ॥ १४

सा कथं ह्याश्रमे सौम्य वत्स्यामि विजनीकृता ।
आख्यास्यामि च कस्याहं दुःखं दुःखपरायणा ॥ १५

किं नु वक्ष्यामि मुनिषु कर्म वा सत्कृतं च किम् ।
कस्मिंश्चित्कारणे त्यक्ता राघवेण महात्मना ॥ १६

यथाज्ञं कुरु सौमित्रे त्यज मां दुःखभागिनीम् ।
निदेशे स्थीयतां राज्ञः शृणु चेदं वचो मम ॥ १७

श्वश्रूणामविशेषेण प्राञ्जलिप्रग्रहेण च ।
शिरसावन्द्य चरणौ कुशलं ब्रूहि पार्थिवम् ॥ १८

जानासि च यथा शुद्धा सीता तत्त्वेन राघव ।
भक्त्या च परया युक्ता हिता च तव नित्यशः ॥ १९
अहं त्यक्ता त्वया वीर अयशोभीरुणा जने ।
यच्च ते वचनीयं स्यादपवादसमुत्थितम् ॥ २०
मया हि परिहर्तव्यं त्वं हि मे परमा गतिः ॥ २१
वक्तव्यश्चेति नृपतिर्धर्मेण सुसमाहितः ।
यथा भ्रातृषु वर्तेथास्तथा पौरेषु नित्यदा ॥ २२
पतिर्हि देवता नार्याः पतिर्बन्धुः पतिर्गुरुः ॥ २३
प्राणैरपि प्रियं तस्माद्भर्तुः कार्यं विशेषतः ।
इति मद्वचनाद्रामो वक्तव्यो मम संग्रहः ॥ २४
एवं ब्रुवत्यां सीतायां लक्ष्मणो दीनचेतनः ।
शिरसावन्द्य धरणीं व्याहर्तुं न शशाक ह ॥ २५
प्रदक्षिणं च तां कृत्वा रुदन्नेव महास्वनः ।
ध्यात्वा मुहूर्तं तामाह किं मां वक्ष्यसि शोभने ॥ २६
इत्युक्त्वा तां नमस्कृत्य पुनर्नावमुपारुहत् ।
आरुह्य च पुनर्नावं नाविकं चाभ्यचोदयत् ॥ २७
स गत्वा चोत्तरं तीरं शोकभारसमन्वितः ।
संमूढ इव दुःखेन रथमध्यारुहद्द्रुतम् ॥ २८
मुहुर्मुहुः परावृत्य दृष्ट्वा सीतामनाथवत् ।
चेष्टन्तीं परतीरस्थां लक्ष्मणः प्रययावथ ॥ २९
दूरस्थं रथमालोक्य लक्ष्मणं च मुहुर्मुहुः ।
निरीक्षमाणां तूद्विग्नां सीतां शोकः समाविशत् ॥ ३०

Rāmāyaṇa-Uttarakāṇḍa.

# IX

## A CLEVER MOUSE

विदिशानगरीबाह्ये न्यग्रोधोऽभूत्पुरा महान् ॥ १
चत्वारः प्राणिनस्तत्र वसन्ति स्म महातरौ ।
नकुलोलूकमार्जारमूषकाः पृथगालयाः ॥ २
भिन्ने भिन्ने बिले मूल आस्तां नकुलमूषकौ ।
मार्जारो मध्यभागस्थे तरोर्महति कोटरे ॥ ३
उलूकस्तु शिरोभागेऽनन्यलभ्ये लतालये ।
मूषकोऽत्र त्रिभिर्वध्यो मार्जारेण त्रयोपरे ॥ ४
अन्नाय मार्जारभयान्मूषको नकुलस्तथा ।
स्वभावेनाप्युलूकश्च परिभ्रेमुर्निशि त्रयः ॥ ५
मार्जारश्च दिवा रात्रौ निर्भयः प्रभ्रमत्यसौ ।
तत्रासन्ने यवक्षेत्रे सदा मूषकलिप्सया ॥ ६
येऽन्येपि युक्त्या जग्मुस्तत्स्वकालेऽन्नाभिवाञ्छया ।
एकदा लुब्धकस्तत्र चण्डालः कश्चिदाययौ ॥ ७
स मार्जारपदश्रेणिं दृष्ट्वा तत्क्षेत्रगामिनीम् ।
तद्वधायाभितः क्षेत्रं पाशान्दत्त्वा ततो ययौ ॥ ८
तत्र रात्रौ च मार्जारः स मूषकजिघांसया ।
एत्य प्रविष्टस्तत्पाशैः क्षेत्रे तस्मिन्नबध्यत ॥ ९
मूषकोऽपि ततोऽन्नार्थी स तत्र निभृतागतः ।
बद्धं तं वीक्ष्य मार्जारं जहर्ष च ननर्त च ॥ १०
यावद्विशति तत्क्षेत्रं दूरादेकेन वर्त्मना ।
तत्र तौ तावदायातावुलूकनकुलावपि ॥ ११

दृष्टमार्जारबन्धौ च मूषकं लब्धुमैच्छताम् ।
मूषकोऽपि च तद्दृष्ट्वा दूराद्विग्नो व्यचिन्तयत् ॥ १२

नकुलोलूकभयदं मार्जारं संश्रये यदि ।
बद्धोऽप्येकप्रहारेण शत्रुर्मामिव मारयेत् ॥ १३

मार्जाराद्दूरगं हन्यादुलूको नकुलश्च माम् ।
तच्छत्रुसङ्कटगतः क्व गच्छामि करोमि किम् ॥ १४

हन्त मार्जारमेवेह श्रयाम्यापद्गतो ह्ययम् ।
आत्मत्राणाय मां रक्षेत्पाशच्छेदोपयोगिनम् ॥ १५

इत्यालोच्य शनैर्गत्वा मार्जारं मूषकोऽब्रवीत् ।
बद्धे त्वय्यतिदुःखं मे तत्ते पाशं छिनद्म्यहम् ॥ १६

ऋजूनां जायते स्नेहः सहवासाद्रिपुष्वपि ।
किं तु मे नास्ति विश्वासस्तव चित्तमजानतः ॥ १७

तच्छ्रुत्वोवाच मार्जारो भद्र विश्वस्यतां त्वया ।
अद्यप्रभृति मे मित्रं भवान्प्राणप्रदायकः ॥ १८

इति श्रुत्वैव मार्जारात्तस्योत्सङ्गं स शिश्रिये ।
तद्दृष्ट्वा नकुलोलूकौ निराशौ ययतुस्ततः ॥ १९

ततो जगाद मार्जारो मूषकं पाशपीडितः ।
गतप्राया निशा मित्र तत्पाशांश्छिन्धि मे द्रुतम् ॥ २०

मूषकोऽपि शनैश्छिन्दँल्लुब्धकागमनोन्मुखः ।
मृषा कटकटायद्भिर्दशनैरकरोच्चिरम् ॥ २१

क्षणाद्रात्रौ प्रभातायां लुब्धके निकटागते ।
मार्जारेऽर्थयमाने द्राक्पाशांश्चिच्छेद मूषकः ॥ २२

छिन्नपाशेऽथ मार्जारे लुब्धकत्रासविद्रुते ।
मूषको मृत्युमुक्तः सन्पलाय्य प्राविशद्बिलम् २३

नाश्वसत्पुनराहूतो मार्जारेण जगाद च ।
काल्युक्त्या ह्यरिर्मित्रं जायते न च सर्वदा ॥ २४

Kathāsaritsāgara. VI. 7.

---

## X

## A ROYAL SHERLOCK HOLMES

श्रावस्तीत्यस्ति नगरी तस्यां पूर्वं प्रसेनजित् ।
राजाभूत्तत्र चाभ्यागात्कोऽप्यपूर्वो द्विजः पुरि ॥ १

स शूद्रान्नभुगेकेन वणिजा गुणवानिति ।
ब्राह्मणस्य गृहे तत्र कस्यचित्स्थापितो द्विजः ॥ २

तत्रैव तेन शुष्कान्नदक्षिणादिभिरन्वहम् ।
आपूर्यत ततोन्यैश्च शनैर्बुद्ध्वा वणिग्वरैः ॥ ३

तेनासौ हेमदीनारसहस्रं कृपणः क्रमात् ।
संचित्य गत्वारण्ये तन्निहत्य क्षिप्तवान्भुवि ॥ ४

एकाकी प्रत्यहं गत्वा तच्च स्थानमवैक्षत ।
एकदा हेमशून्यं तत्खातं व्यात्तं च दृष्टवान् ॥ ५

अथोपागाच्च विलपंस्तं विप्रं यद्गृहे स्थितः ।
पृष्टस्तं च स्ववृत्तान्तं तस्मै सर्वं न्यवेदयत् ॥ ६

गत्वा तीर्थमभुञ्जानः प्राणांस्त्यक्तुमियेष च ।
बुद्ध्वा च सोऽन्नदाताऽस्य वणिगन्यैः सहाययौ ॥ ७

स तं जगाद किं ब्रह्मन्वित्तहेतोर्मुमूर्षसि ।
अकालमेघवद्वित्तमकस्मादेति याति च ॥ ८

इत्याद्युक्तोऽपि तेनासौ न जहौ मरणग्रहम् ।
प्राणेभ्योऽप्यर्थमात्रा हि कृपणस्य गरीयसी ॥ ९

ततश्च मृतये तीर्थं गच्छतोऽस्य द्विजन्मनः ।
स्वयं प्रसेनजिद्राजा तद्बुद्ध्रान्तिकमाययौ ॥ १०
पप्रच्छ चैनं किं किंचिदस्ति तत्रोपलक्षणम् ।
यत्र भूमौ निखातास्ते दीनारा ब्राह्मण त्वया ॥ ११
तच्छ्रुत्वा स द्विजोऽवादीदस्ति क्षुद्रोऽत्र पादपः ।
अटव्यां देव तन्मूले निखातं तन्मया धनम् ॥ १२
इत्याकर्ण्याब्रवीद्राजा दास्याम्यन्विष्य तत्तव ।
धनं स्वकोषादथवा मा त्याक्षीर्जीवितं द्विज ॥ १३
इत्युक्त्वा मरणोद्योगान्निवार्य विनिधाय च ।
द्विजं तं वणिजो हस्ते स राजाभ्यन्तरं गतः ॥ १४
तत्रादिश्य प्रतीहारं शिरोर्तिव्यपदेशतः ।
वैद्यानानाययत्सर्वान्दत्त्वा पटहघोषणाम् ॥ १५
आतुराः के कियन्तोऽत्र कस्यादाः किं त्वमौषधम् ।
इत्युपानीय पप्रच्छ तानेकैकं विविक्तगः ॥ १६
तेऽपि तस्मै तदैकैकः सर्वमूचुर्महीपते ।
एको वैद्यस्तन्मध्यात्क्रमपृष्टोऽब्रवीदिदम् ॥ १७
वणिजो मातृदत्तस्य देव नागबला मया ।
अस्वस्थस्योपदिष्टाद्य द्वितीयं दिनमौषधिः ॥ १८
तच्छ्रुत्वा स तमाहूय राजा वणिजमभ्यधात् ।
ननु नागबला केन तवानीतोच्यतामिति ॥ १९
देव कर्मकरेणेति तेनोक्ते वणिजा तदा ।
क्षिप्रमानाय्य तं राजा स कर्मकरमब्रवीत् ॥ २०

त्वया नागबलाहेतोः खनता शाखिनस्तलम् ।
दीनारजातं यल्लब्धं ब्रह्मस्त्वं तत्समर्पय ॥ २१

इत्युक्तो भूभृता भीतः प्रतिपद्यैव तत्क्षणम् ।
स तानानीय दीनारांस्तत्र कर्मकरो जहौ ॥ २२

राजाऽप्युपोषितायास्मै द्विजायाहूय तान्ददौ ।
दीनारान्हारितप्राप्तान्प्राणानिव बहिश्चरान् ॥ २३

एवं स लब्धवान्बुद्ध्या नीतं मूलतलात्तरोः ।
द्विजार्थं भूपतिर्जानन्नोषधिं तां तदुद्भवाम् ॥ २४

Kathāsaritsāgara VI. 7.

---

## XI
## THE EVIL EFFECTS OF GAMBLING, DRINKING AND OTHER VICES

वाग्दण्डयोश्च पारुष्यमर्थदूषणमेव च ।
स्मृतं व्यसनतत्त्वज्ञैः क्रोधजं व्यसनत्रयम् ॥ १

कामजं मृगया द्यूतं स्त्रियः पानं तथैव च ।
व्यसनं व्यसनार्थज्ञैश्चतुर्विधमुदाहृतम् ॥ २

अकस्मादेव यः कोपादभीक्ष्णं बहु भाषते ।
तस्मादुद्विजते लोकः सस्फुलिङ्गादिवानलात् ॥ ३

नोद्वेजयेज्जगद्वाचा रूक्षया प्रियवाग्भवेत् ।
प्रायेण प्रियकर्मा यः कृपणोऽपि हि सेव्यते ॥ ४

उद्वेजयति भूतानि दण्डपारुष्यवान्नृपः ।
भूतान्युद्वेजमानानि द्विषतां यान्ति संश्रयम् ॥ ५

दूष्यस्यादूषणार्थं च परित्यागो महीयसः ।
अर्थस्य नीतितत्त्वज्ञैरर्थदूषणमुच्यते ॥ ६

दवाग्निधूमसंरोधो दिङ्मोहो भ्रमणानि च ।
इत्यादि पृथिवीन्द्राणां मृगयाव्यसनं स्मृतम् ॥ ७

जितश्रमत्वं व्यायाम आममेदकफक्षयः ।
चरस्थिरेषु लक्ष्येषु बाणसिद्धिरनुत्तमा ॥ ८

मृगयायां गुणानेतानाहुरन्ये न तत्क्षमम् ।
दोषाः प्राणहराः प्रायस्तस्मात्तद् व्यसनं महत् ॥ ९

लोभो धर्मक्रियालोपः कर्मणामप्रवर्तनम् ।
सत्समागमविच्छित्तिरसद्भिः सह वर्तनम् ॥ १०

अर्थनाशक्रियाऽवश्यं नित्यं वैरानुबन्धिता ।
सत्यप्यर्थे निराशत्वमसत्यपि च रागिता ॥ ११

स्नानादिगात्रसंस्कारपरिभोगेष्वनादरः ।
अव्यायामोऽङ्गदौर्बल्यं शास्त्रार्थाप्रत्यवेक्षणम् ॥ १२

गूहनं मूत्रशकृतोः क्षुत्पिपासोपपीडनम् ।
इत्यादींस्तत्र निपुणा द्यूतदोषान् प्रचक्षते ॥ १३

पाण्डवो धर्मराजस्तु लोकपाल इवापरः ।
द्यूतेन व्यसता विद्वान् कलत्राण्यपि हारितः ॥ १४

नलश्च राजा द्यूतेन हृते राज्यमहोदये ।
धर्मदारान् वने त्यक्त्वा परकर्माकरोत्प्रभुः ॥ १५

स्त्रीमुखालोकनतया व्यग्राणामल्पचेतसाम् ।
ईहितानि हि गच्छन्ति यौवनेन सह क्षयम् ॥ १६

गमने विह्वलत्वं च संज्ञानाशो विवस्त्रता ।
असम्बन्धप्रलापित्वमकस्माद् व्यसनं मुहुः ॥ १७

प्राणग्लानिः सुहृन्नाशः प्रज्ञाश्रुतिमतिभ्रमः ।
सद्भिर्वियोगोऽसद्भिश्च सङ्गोऽनर्थेन सङ्गमः ॥ १८

स्खलनं वेपथुस्तन्द्रा नितान्तस्त्रीनिषेवणम् ।
इत्यादिपानव्यसनमत्यन्तं सद्भिगर्हितम् ॥ १९

श्रुतशीलबलोपेताः पानदोषेण भूयसा ।
क्षयमक्षीणनामानो जग्मुरन्धकवृष्णयः ॥ २०

योगीश्वरश्च भगवान्भार्गवो भृगुतुल्यधीः ।
शुक्रः पानमदात्तीव्राद्बुभुजे शिष्यमौरसम् ॥ २१

पानक्षिप्तो हि पुरुषो यत्र तत्र प्रवर्तते ।
यात्यसंव्यवहार्यत्वं यत्र तत्र प्रवर्तनात् ॥ २२

तदपनयविधिज्ञैः श्रेयसां विघ्नकारि
व्यसनमिदमुदारं सप्त चैवोपदिष्टम् ।
जनयति हि निसर्गादेकमप्याशु नाशं
किमु न भवति हन्ता यौगपद्योदयेन ॥ २३

अरिगणा नियतं व्यसने स्थितं
परिभवन्ति भवन्ति च दुश्छिदः ।
अपगतव्यसनाश्च बुधा रिपून्
परिभवन्ति भवन्ति च दुश्छिदः ॥ २४

Kāmandakīyanītisāra XIV.

---

# XII

## A FRAUDULENT CREDITOR BROUGHT TO ACCOUNT BY THE SAGACITY OF A KING

प्रायोपवेशाधिकृतैर्बोधितेन महीभृता ।
प्रायोपविष्टो निकटं प्रापितः कश्चिदब्रवीत् ॥ १

अहमाढ्योऽभवं पूर्वं वास्तव्योऽत्र महीपते ।
निष्किञ्चनत्वं शनकैरगच्छं दैवयोगतः ॥ २

उत्तमर्णैः पीडितस्य प्रवृद्धर्णस्य तस्य मे ।
निश्चयोऽभूदृणं छित्त्वा परिभ्रान्तुं दिगन्तरे ॥ ३

अथ विक्रीय सर्वस्वमृणं शोधयता मया ।
महाधनाय वणिजे विक्रीतं निजमन्दिरम् ॥ ४

भार्यामुद्दिश्य भर्तव्यामेक एव तु वर्जितः ।
सोपानकूपो विक्रीतान्महतो वेश्मनस्ततः ॥ ५

निदाघे पुष्पताम्बूलीपर्णाद्यत्रातिशीतले ।
न्यस्यद्भिर्मालिकैर्दत्तात्सा जीवेद्भाटकादिति ॥ ६

ततो दिगन्तराद् भ्रान्त्वा विंशत्या वत्सरैरहम् ।
लब्धाल्पवित्तः संप्राप्तो जन्मभूमिमिमां पुनः ॥ ७

अन्विष्यता मया साध्वी स्ववधूर्ददृशेऽथ सा ।
विवर्णदेहा जीवन्ती प्रेष्यात्वेनान्यवेश्मसु ॥ ८

किं दत्तजीविकाऽपि त्वमीदृशीं वृत्तिमाश्रिता ।
मयेति सा सदुःखेन पृष्टा स्वोदन्तमब्रवीत् ॥ ९

सोपानकूपं संप्राप्ता त्वयि याते दिगन्तरम् ।
लगुडैस्ताडयित्वाहं वणिजा तेन वारिता ॥ १०

तदन्या काऽऽस्त मे वृत्तिरित्युक्त्वा विरराम सा ।
तदाकर्ण्य निमग्नोऽहमन्तरे शोककोपयोः ॥ ११

कृतप्रायोपवेशोऽथ स्थेयैस्तैस्तैः पदे पदे ।
प्रत्यर्थिनो दत्तजयैः किमप्यस्मि पराजितः ॥ १२

जडत्वाद्वेद्मि न न्यायं न विक्रीतो मया पुनः ।
सोपानकूप इत्यस्मिन्नर्थे प्राणा इमे पणः ॥ १३

सोहं विपद्ये क्षीणार्थो द्वारि शास्तुस्तव ध्रुवम् ।
वृजिनादस्ति चेद्भीतिर्वस्तु निर्णीयतां स्वयम् ॥ १४

राजेति तेन विज्ञप्तो दत्त्वा धर्मासनं स्वयम् ।
सङ्घटय्याखिलान्स्थेयानासीत्तत्त्वं विचारयन् ॥ १५

स्थेयास्तमूचुर्बहुशो विचार्यायं पराजितः ।
शाठ्यादगणयन्न्यायं दण्ड्यो लिखितदूषकः ॥ १६

सोपानकूपसहितं विक्रीतं गृहमित्यथ ।
राजा विक्रयपत्रस्थान्स्वयं वर्णानवाचयत् ॥ १७

ततोऽधिगतमित्येव सभ्येषु निगदत्स्वपि ।
अन्तरात्मा जगादेव नृपतेरर्थिनो जयम् ॥ १८

मुहूर्तमिव सञ्चिन्त्य राजान्याभिरभूच्चिरम् ।
कथाभिरतिचित्राभिर्मोहयन्सभ्यमण्डलम् ॥ १९

कथान्तराले सर्वेभ्यो गृह्णन्रत्नानि वीक्षितुम् ।
हसन्प्रत्यर्थिनो हस्तादुपादत्ताङ्गुलीयकम् ॥ २०

क्षणादेवाखिलैः स्थेयमित्थमेवेति सस्मितम् ।
वचो ब्रुवाणः प्रययौ पादक्षालनकैतवात् ॥ २१

अभिज्ञानाय तत्रस्थः स वितीर्याङ्गुलीयकम् ।
भृत्यमेकं वणिग्वेश्म प्राहिणोद्दत्तवाचिकम् ॥ २२

स वणिग्गणनाध्यक्षं ययाचे साङ्गुलीयकः ।
यत्राब्दे पत्रमुत्पन्नं गणनापत्रिकां ततः ॥ २३
निर्णयेऽद्य तया कृत्यमस्ति भाण्डपतेरिति ।
श्रुत्वादाद्गणनाध्यक्षस्तां गृहीताङ्गुलीयकः ॥ २४
दीनाराणां दशशतीं तस्यां भूभृदवाचयत् ।
व्ययमध्येऽधिकरणलेखकाय समर्पिताम् ॥ २५
तस्मै मितधनार्हाय बहुमूल्यार्पणान्नृपः ।
रेफे सकारं वणिजा कारितं निश्चिकाय सः ॥ २६
सभायां तत्प्रदर्श्याथ पृष्ट्वा दत्त्वाभयं च तम् ।
आनीय लेखकं सभ्यान्सञ्जातप्रत्ययान्व्यधात् ॥ २७
सभ्यैरभ्यर्च्यमानेन राज्ञा सार्थं वणिग्गृहम् ।
वितीर्णमर्थिने देशात्प्रत्यर्थी च प्रवासितः ॥ २८

Rājataraṅgiṇī VI.

---

## XIII
## THE CHURNING OF THE OCEAN FOR DRAWING OUT THE JEWELS

श्रीभगवानुवाच ।

हन्त ब्रह्मन्नहो शम्भो हे देवा मम भाषितम् ।
शृणुतावहिताः सर्वे श्रेयो वः स्याद्यथा सुराः ॥ १
अमृतोत्पादने यत्नः क्रियतामविलम्बितम् ।
यस्य पीतस्य वै जन्तुर्मृत्युग्रस्तोऽमरो भवेत् ॥ २
क्षिप्त्वा क्षीरोदधौ सर्वा वीरुत्तृणलतौषधीः ।
मन्थानं मन्दरं कृत्वा नेत्रं कृत्वा तु वासुकिम् ॥ ३

सहायेन मया देवा निर्मन्थध्वमतंद्रिताः ।
क्लेशभाजो भविष्यन्ति दैत्या यूयं फलग्रहाः ॥ ४

यूयं तदनुमन्यध्वं यदिच्छन्त्यसुराः सुराः ।
न संरम्भेण सिध्यन्ति सर्वेऽर्थाः सान्त्वया यथा ॥ ५

न भेतव्यं कालकूटाद्विषाज्जलधिसम्भवात् ।
लोभः कार्यो न वो जातु रोषः कामस्तु वस्तुषु ॥ ६

इति देवान्समादिश्य भगवान्पुरुषोत्तमः ।
तेषामन्तर्दधे राजन्स्वच्छन्दगतिरीश्वरः ॥ ७

अथ तस्मै भगवते नमस्कृत्य पितामहः ।
भवश्च जग्मतुः स्वं स्वं धामोपेयुर्बलिं सुराः ॥ ८

ते वैरोचनिमासीनं गुप्तं चासुरयूथपैः ।
श्रिया परमया जुष्टं जिताशेषमुपागमन् ॥ ९

महेन्द्रः श्लक्ष्णया वाचा सान्त्वयित्वा महामतिः ।
अभ्यभाषत तत्सर्वं शिक्षितं पुरुषोत्तमात् ॥ १०

ततो देवासुराः कृत्वा संविदं कृतसौहृदाः ।
उद्यमं परमं चक्रुरमृतार्थे परंतप ॥ ११

ततस्ते मन्दरगिरिमोजसोत्पाट्य दुर्मदाः ।
नदन्त उदधिं निन्युः शक्ताः परिघबाहवः ॥ १२

ते नागराजमामन्त्र्य फलभागेन वासुकिम् ।
परिवीय गिरौ तस्मिन्नेत्रमब्धिं मुदान्विताः ॥ १३

आरेभिरे सुसंयत्ता अमृतार्थं कुरूद्वह ।
हरिः पुरस्ताज्जगृहे पूर्वं देवास्ततोऽभवन् ॥ १४

तन्नैच्छन्दैत्यपतयो महापुरुषचेष्टितम् ।
न गृह्णीमो वयं पुच्छमहेरङ्गममङ्गलम् ॥ १५

स्वाध्यायश्रुतसम्पन्नाः प्रख्याता जन्मकर्मभिः ।
इति तूष्णीं स्थितान्दैत्यान्विलोक्य पुरुषोत्तमः ॥ १६

स्मयमानो विसृज्याग्रं पुच्छं जग्राह सामरः ।
कृतस्थानविभागास्त एवं कश्यपनन्दनाः ॥ १७

ममन्थुः परमायत्ता अमृतार्थे पयोनिधिम् ।
मथ्यमानेऽर्णवे सोऽद्रिरनाधारो ह्यपोऽविशत् ॥ १८

त्रिलोक्य विघ्नेशविधिं तदेश्वरो
दुरन्तवीर्योऽवितथाभिसन्धिः ।
कृत्वा वपुः काच्छपमद्भुतं महत्
प्रविश्य तोयं गिरिमुज्जहार ॥ १९

अहीन्द्रसाहस्रकठोरदृङ्मुख-
श्वासाग्निधूमाहतवर्चसोऽसुराः ।
पौलोमकालेयबलील्वलादयो
दवाग्निदग्धाः सरला इवाभवन् ॥ २०

मथ्यमानात्तदा सिन्धोर्देवासुरवरूथपैः ।
यदा सुधा न जायेत निर्ममन्थाजितः स्वयम् ॥ २१

निर्मथ्यमानादुदधेरभूद्विषं
महोल्बणं हालहलाह्वमग्रतः ।
संभ्रान्तमीनोन्मकराहिकच्छपा-
त्तिमिद्विपग्राहतिमिङ्गिलाकुलात् ॥ २२

तदुग्रवेगं दिशि दिश्युपर्यधो
विसर्पदुत्सर्पदसह्यमप्रति ।
भीताः प्रजा दुद्रुवुरङ्ग सेश्वरा
अरक्ष्यमाणाः शरणं सदाशिवम् ॥ २३

देव देव महादेव भूतात्मन् भूतभावन ।
त्राहि नः शरणापन्नांस्त्रैलोक्यदहनाद्विषात् ॥ २४

तद्वीक्ष्य व्यसनं तासां कृपया भृशपीडितः ।
सर्वभूतसुहृद्देव इदमाह सतीं प्रियाम् ॥ २५

अहो बत भवान्येतत्प्रजानां पश्य वैशसम् ।
क्षीरोदमथनोद्भूतात्कालकूटादुपस्थितम् ॥ २६

आसां प्राणपरीप्सूनां विधेयमभयं हि मे ।
एतावान्हि प्रभोरर्थो यद्दीनपरिपालनम् ॥ २७

एवमामन्त्र्य भगवान्भवानीं विश्वभावनः ।
तद्विषं जग्धुमारेभे प्रभावज्ञाऽन्वमोदत २८

ततः करतलीकृत्य व्यापि हालाहलं विषम् ।
अभक्षयन्महादेवः कृपया भूतभावनः ॥ २९

तस्यापि दर्शयामास स्ववीर्यं जलकल्मषः ।
यच्चकार गले नीलं तच्च साधोर्विभूषणम् ॥ ३०

पीते गरे वृषाङ्केण प्रीतास्तेऽमरदानवाः ।
ममन्थुस्तरसा सिन्धुं हविर्धानी ततोऽभवत् ॥ ३१

तत उच्चैःश्रवा नाम हयोऽभूच्चन्द्रपाण्डुरः ।
तस्मिन्बलिः स्पृहां चक्रे नेन्द्र ईश्वरशिक्षया ॥ ३२

तत ऐरावतो नाम वारणेन्द्रो विनिर्गतः ।
दन्तैश्चतुर्भिः श्वेताद्रेर्हरन्भगवतो महिम् । ३३

कौस्तुभाख्यमभूद्रत्नं पद्मरागो महोदधेः ।
तस्मिन्हरिः स्पृहां चक्रे वक्षोऽलङ्करणे मणौ ॥ ३४

ततोऽभवत्पारिजातः सुरलोकविभूषणम् ।
पूरयत्यर्थिनो योऽर्थैः शश्वद्भुवि यथा भवान् ॥ ३५

ततश्चाप्सरसो जाता निष्ककण्ठ्यः सुवाससः ।
रमण्यः स्वर्गिणां वल्गुगतिलीलावलोकनैः ॥ ३६

ततश्चाविरभूत्साक्षाच्छ्री रमा भगवत्परा ।
रञ्जयन्ती दिशः कान्त्या विद्युत्सौदामनी यथा ॥ ३७

अथासीद्वारुणी देवी कन्या कमललोचना ।
असुरा जगृहुस्तां वै हरेरनुमतेन ते ॥ ३८

अथोदधेर्मथ्यमानात्काश्यपैरमृतार्थिभिः ।
उदतिष्ठन्महाराज पुरुषः परमाद्भुतः ॥ ३९

दीर्घपीवरदोर्दण्डः कम्बुग्रीवोऽरुणेक्षणः ।
श्यामलस्तरुणः स्रग्वी सर्वाभरणभूषितः ॥ ४०

पीतवासा महोरस्कः सुमृष्टमणिकुण्डलः ।
स्निग्धकुञ्चितकेशान्तः सुभगः सिंहविक्रमः ॥ ४१

अमृतापूर्णकलशं बिभ्रद्वलयभूषितः
स वै भगवतः साक्षाद्विष्णोरंशांशसम्भवः ॥ ४२

धन्वन्तरिरिति ख्यात आयुर्वेददृगिज्यभाक् ।
तमालोक्यासुराः सर्वे कलशं चामृताभृतम् ॥ ४३

लिप्सन्तः सर्ववस्तूनि कलशं तरसाऽहरन् ।
नीयमानेऽसुरैस्तस्मिन्कलशेऽमृतभाजने ॥ ४४

विषण्णमनसो देवा हरिं शरणमाययुः ।
इति तद्दैन्यमालोक्य भगवान्भृत्यकामभृत् ।
मा खिद्यत मिथोऽर्थं वः साधयिष्ये स्वमायया ॥ ४५

मिथः कलिरभूत्तेषां तदर्थे तर्षचेतसाम् ।
अहं पूर्वमहं पूर्वं न त्वं न त्वमिति प्रभो ॥ ४६

देवाः स्वं भागमर्हन्ति ये तुल्यायासहेतवः ।
सत्रयाग इवैतस्मिन्नेष धर्मः सनातनः ॥ ४७

इति स्वान्प्रत्यषेधन्वै दैतेया जातमत्सराः ।
दुर्बलाः प्रबलान्राजान्गृहीतकलशान्मुहुः ॥ ४८

एतस्मिन्नन्तरे विष्णुः सर्वोपायविदीश्वरः ।
योषिद्रूपमनिर्देश्यं दधार परमाद्भुतम् ॥ ४९

Bhāgavatapurāṇa VIII.

---

## XIV

### DILĪPA'S SELF-SACRIFICE AND DEVOTION ARE REWARDED

तमार्यगृह्यं निगृहीतधेनुर्मनुष्यवाचा मनुवंशकेतुम् ।
विस्माययन् विस्मितमात्मवृत्तौ सिंहोरुसत्त्वं निजगाद सिंहः ॥ १

अलं महीपाल तव श्रमेण प्रयुक्तमप्यस्त्रमितो वृथा स्यात् ।
न पादपोन्मूलनशक्ति रंहः शिलोच्चये मूर्छति मारुतस्य ॥ २

कैलासगौरं वृषमारुरुक्षोः पादार्पणानुग्रहपूतपृष्ठम् ।
अवेहि मां किङ्करमष्टमूर्तेः कुम्भोदरं नाम निकुम्भमित्रम् ॥ ३

अमुं पुरः पश्यसि देवदारुं पुत्रीकृतोऽसौ वृषभध्वजेन ।
यो हेमकुम्भस्तननिःसृतानां स्कन्दस्य मातुः पयसां रसज्ञः ॥ ४

कण्डूयमानेन कटं कदाचिद्वन्यद्विपेनोन्मथिता त्वगस्य ।
अथैनमद्रेस्तनया शुशोच सेनान्यमालीढमिवासुरास्त्रैः ॥ ५

तदाप्रभृत्येव वनद्विपानां त्रासार्थमस्मिन्नहमद्रिकुक्षौ ।
व्यापारितः शूलभृता विधाय सिंहत्वमङ्कागतसत्त्ववृत्ति ॥ ६

तस्यालमेषा क्षुधितस्य तृप्त्यै प्रदिष्टकाला परमेश्वरेण ।
उपस्थिता शोणितपारणा मे सुरद्विषश्चान्द्रमसी सुधेव ॥ ७

स त्वं निवर्तस्व विहाय लज्जां गुरोर्भवान्दर्शितशिष्यभक्तिः ।
शस्त्रेण रक्ष्यं यदशक्यरक्षं न तद्यशः शस्त्रभृतां क्षिणोति ॥ ८

इति प्रगल्भं पुरुषाधिराजो मृगाधिराजस्य वचो निशम्य ।
प्रत्याहतास्त्रो गिरिशप्रभावादात्मन्यवज्ञां शिथिलीचकार ॥ ९

प्रत्यब्रवीच्चैनमिषुप्रयोगे तत्पूर्वसङ्गे वितथप्रयत्नः ।
जडीकृतस्त्र्यम्बकवीक्षितेन वज्रं मुमुक्षन्निव वज्रपाणिः ॥ १०

संरुद्धचेष्टस्य मृगेन्द्र कामं हास्यं वचस्तद्यदहं विवक्षुः ।
अन्तर्गतं प्राणभृतां हि वेद सर्वं भवान्भावमतोऽभिधास्ये ॥ ११

मान्यः स मे स्थावरजङ्गमानां सर्गस्थितिप्रत्यवहारहेतुः ।
गुरोरपीदं धनमाहिताग्नेर्नश्यत्पुरस्तादनुपेक्षणीयम् ॥ १२

स त्वं मदीयेन शरीरवृत्तिं देहेन निर्वर्तयितुं प्रसीद ।
दिनावसानोत्सुकबालवत्सा विसृज्यतां धेनुरियं महर्षेः ॥ १३

अथान्धकारं गिरिगह्वराणां दंष्ट्रामयूखैः शकलानि कुर्वन् ।
भूयः स भूतेश्वरपार्श्ववर्ती किंचिद्विहस्यार्थपतिं बभाषे ॥ १४

एकातपत्रं जगतः प्रभुत्वं नवं वयः कान्तमिदं वपुश्च ।
अल्पस्य हेतोर्बहु हातुमिच्छन्विचारमूढः प्रतिभासि मे त्वम् ॥ १५

भूतानुकम्पा तव चेदियं गौरेका भवेत्स्वस्तिमती त्वदन्ते ।
जीवन्पुनः शश्वदुपप्लवेभ्यः प्रजाः प्रजानाथ पितेव पासि ॥ १६

अथैकधेनोरपराधचण्डाद्गुरोः कृशानुप्रतिमाद्बिभेषि ।
शक्योऽस्य मन्युर्भवता विनेतुं गाः कोटिशः स्पर्शयता घटोध्नीः ॥ १७

तद्रक्ष कल्याणपरम्पराणां भोक्तारमूर्जस्वलमात्मदेहम् ।
महीतलस्पर्शनमात्रभिन्नमृद्धं हि राज्यं पदमैन्द्रमाहुः ॥ १८

एतावदुक्त्वा विरते मृगेन्द्रे प्रतिस्वनेनास्य गुहागतेन ।
शिलोच्चयोऽपि क्षितिपालमुच्चैः प्रीत्या तमेवार्थमभाषतेव ॥ १९

निशम्य देवानुचरस्य वाचं मनुष्यदेवः पुनरप्युवाच ।
धेन्वा तदध्यासितकातराक्ष्या निरीक्ष्यमाणः सुतरां दयालुः ॥ २०

क्षतात्किल त्रायत इत्युदग्रः क्षत्रस्य शब्दो भुवनेषु रूढः ।
राज्येन किं तद्विपरीतवृत्तेः प्राणैरुपक्रोशमलीमसैर्वा ॥ २१

कथं नु शक्योऽनुनयो महर्षेर्विश्राणनाच्चान्यपयस्विनीनाम् ।
इमामनूनां सुरभेरवेहि रुद्रौजसा तु प्रहृतं त्वयास्याम् ॥ २२

सेयं स्वदेहार्पणनिष्क्रयेण न्याय्या मया मोचयितुं भवत्तः ।
न पारणा स्याद्विहता तवैवं भवेदलुप्तश्च मुनेः क्रियार्थः ॥ २३

भवानपीदं परवानवैति महान्हि यत्नस्तव देवदारौ ।
स्थातुं नियोक्तुर्न हि शक्यमग्रे विनाश्य रक्ष्यं स्वयमक्षतेन ॥ २४

किमप्यहिंस्यस्तव चेन्मतोऽहं यशःशरीरे भव मे दयालुः ।
एकान्तविध्वंसिषु मद्विधानां पिण्डेष्वनास्था खलु भौतिकेषु ॥ २५

सम्बन्धमाभाषणपूर्वमाहुर्वृत्तः स नौ सङ्गतयोर्वनान्ते ।
तद्भूतनाथानुग नार्हसि त्वं सम्बन्धिनो मे प्रणयं विहन्तुम् ॥ २६

तथेति गामुक्तवते दिलीपः सद्यः प्रतिष्टम्भविमुक्तबाहुः ।
स न्यस्तशस्त्रो हरये स्वदेहमुपानयत्पिण्डमिवामिषस्य ॥ २७

तस्मिन्क्षणे पालयितुः प्रजानामुत्पश्यतः सिंहनिपातमुग्रम् ।
अवाङ्मुखस्योपरि पुष्पवृष्टिः पपात विद्याधरहस्तमुक्ता ॥ २८

उत्तिष्ठ वत्सेत्यमृतायमानं वचो निशम्योत्थितमुत्थितः सन् ।
ददर्श राजा जननीमिव स्वां गामग्रतः प्रस्रविणीं न सिंहम् ॥ २९

तं विस्मितं धेनुरुवाच साधो मायां मयोद्भाव्य परीक्षितोऽसि ।
ऋषिप्रभावान्मयि नान्तकोऽपि प्रभुः प्रहर्तुं किमुतान्यहिंस्राः ॥ ३०

भक्त्या गुरौ मय्यनुकम्पया च प्रीतास्मि ते पुत्र वरं वृणीष्व ।
न केवलानां पयसां प्रसूतिमवेहि मां कामदुघां प्रसन्नाम् ॥ ३१

Raghuvaṁśa II.

---

## XV

### KING LAVAṆAPRASĀDA OF ANHILWADPĀTAN APPOINTS VASTUPĀLA AND HIS BROTHER TEJAḤPĀLA AS HIS MINISTERS

भूमिभर्तुरथ कर्तुमिच्छतस्तस्य सत्पुरुषसंग्रहं श्रिये ।
एकदा हृदयमागताविमौ दीप्तशीतकिरणाविवाम्बरम् ॥ १

तद्गुणान्निपुणया मनीषिणामग्रणीर्धिषणया विमृश्य सः ।
आजुहाव च समागतौ च तौ कार्यसिद्धिरविलम्बिनी सताम् ॥ २

तत्र तौ ददृशतुः शतक्रतुप्रायमायतभुजं महीभुजम् ।
सानुजं च सचिवं स दृष्टवानर्थजुष्टमिव धर्ममग्रतः ॥ ३

तावुपायनमुपायपण्डितौ मण्डितौजसिकपद्धतेः पुरः ।
उद्गणय्य चरणद्वयं मुदा तस्य वीरतरणेः प्रणेमतुः ॥ ४

तस्य निर्दलितभूरिभूभृतः स्वःपतिप्रतिकृतेः कृतासनौ ।
अश्वराजतनुजौ रराजतुस्तौ सुरासुरगुरूपमौ पुरः ॥ ५

नीलनीरदरवानुवादिना नादयन्नथ दिशः स्वरेण सः ।
तौ पुनश्चरितचातकव्रतौ वक्तुमारभत मारसन्निभः ॥ ६

आकृतिर्गुणसमृद्धिशंसिनी नम्रता कुलविशुद्धिसूचिका ।
वाक्क्रमः कथितशास्त्रसंक्रमः संयमश्च युवयोर्वयोऽधिकः ॥ ७

श्लाघ्यतां कुलमुपैति पैतृकं स्यान्मनोरथतरुः फलेग्रहिः ।
उन्नमन्ति यशसा सह श्रियः स्वामिनां च पुरुषैर्भवादृशैः ॥ ८

यौवनेऽपि मदनान्न विक्रिया नो धनेऽपि विनयव्यतिक्रमः ।
दुर्जनेऽपि न मनागनार्जवं केन वामिति नवाकृतिः कृता ॥ ९

आवयोस्तु पितृपुत्रयोर्महानाहितः क्षितिभरः पुरद्रुहा ।
तद्युवां सचिवपुङ्गवावयं योक्तुमत्र युगपत्समुत्सहे ॥ १०

विद्युदुज्ज्वलचलाचलश्रियं सन्निवेश्य सचिवेषु साधुषु ।
संप्रहारभरसम्भृतश्रमाः शेरते सुखममी क्षमाभुजः ॥ ११

येन केन च सुधर्मकर्मणा भूतलेऽत्र सुलभा विभूतयः ।
दुर्लभानि सुकृतानि तानि यैर्लभ्यते पुरुषरत्नमुत्तमम् ॥ १२

इत्युदीर्य भुजवीर्यशालिना मुद्रिता दशनचन्द्रिकाऽमुना ।
वस्तुपालवदनारविन्दतः स्यन्दते स्म मधु वाङ्मयं ततः ॥ १३

देव सेवकजनः स गण्यते पुण्यवत्सु गुणवत्सु चाग्रणीः ।
यः प्रसन्नवदनाम्बुजन्मना स्वामिना मधुरमेवमुच्यते ॥ १४

सप्रसादवदनस्य भूपतेर्यत्र यत्र विलसन्ति दृष्टयः ।
तत्र तत्र शुचिता कुलीनता दक्षता सुभगता च गच्छति ॥ १५

जायते जलदवृन्दवृष्टिभिः शाखिनां सफलता शनैः शनैः ।
तुष्यतां क्षितिभृतां तु दृष्टिभिस्तत्क्षणादपि नृणां फलोदयः ॥ १६

नास्ति तीर्थमिह पार्थिवात्परं यन्मुखाम्बुजविलोकनादपि ।
नश्यति द्रुतमपायपातकं सम्पदेति च समीहिता सताम् ॥ १७

जीवनाय मनुजन्मनामिह भ्राम्यतामथ कदापि स प्रभुः ।
त्वादृशो भवति भाग्ययोगतो वेत्ति यः सदसतां यदन्तरम् ॥ १८

किं तु विज्ञपयितास्मि किञ्चन स्वामिना तदवधार्यतां हृदा ।
न्यायनिष्ठुरतरा गिरः सतां श्रोतुमप्यधिकृतिस्तवैव यत् ॥ १९

सा गता शुभमयी युगत्रयी देव संप्रति युगं कलिः पुनः ।
सेवकेषु न कृतं कृतज्ञता नापि भूपतिषु यत्र दृश्यते ॥ २०

ते राजानः स्वर्गताश्चक्रिरे यैर्वीरैर्वीरे क्ष्मापतीनां प्रबन्धाः ।
तेऽपि प्राप्तास्तत्र सन्मन्त्रिणो ये श्लोकांस्तेषां शोधयन्ति स्म शुद्धाः ॥

दृष्टिर्नष्टा भूपतीनां तमोभिस्ते लोभान्धान्सांप्रतं कुर्वतेऽग्रे ।
यैर्नीयन्ते वर्त्मना तेन यत्र भ्रश्यन्त्याशु व्याकुलास्तेऽपि तेऽपि ॥ २२

न सर्वथा कश्चन लोभवर्जितः करोति सेवामनुवासरं विभोः ।
तथापि कार्यः स तथा मनीषिभिः परत्र बाधा न तथात्र वाच्यता ॥ २३

पुरस्कृत्य न्यायं खलजनमनादृत्य सहजा-
नरीन्निर्जित्य श्रीपतिचरितमाश्रित्य च यदि ।
समुद्धर्तुं धात्रीमभिलषसि तत्सेव शिरसा
धृतो देवादेशः स्फुटमपरथा स्वस्ति भवते ॥ २४

सचिववचनमेतच्चेतसा सोत्सवेन
क्षितितलतिलकोऽयं कृत्स्नमाकर्ण्य सम्यक् ।
अकृत कनकमुद्राकान्तिकिञ्जल्कसान्द्रं
करसरसिजयुग्मं मन्त्रियुग्मस्य तस्य ॥ २५

अवनिपतिरनेन भूरिधाम्ना सचिवयुगेन चिराद्विराजमानः ।
पतगपतिरिवारिनागनाशं जनयति पक्षयुगेन संयुगे स्म ॥ २६

Kīrtikaumudī III.

# XVI

## DESCRIPTION OF ŚARAD

वनस्पतीनां सरसां नदीनां तेजस्विनां कान्तिभृतां दिशां च ।
निर्याय तस्याः स पुरः समन्ताच्छ्रियं दधानां शरदं ददर्श ॥ १

तरङ्गसङ्गाच्चपलैः पलाशैर्ज्वालाश्रियं सातिशयां दधन्ति ।
सधूमदीप्ताग्निरुचीनि रेजुस्ताम्रोत्पलान्याकुलषट्पदानि ॥ २

बिम्बागतैस्तीरवनैः समृद्धिं निजां विलोक्यापहृतां पयोभिः ।
कूलानि सामर्षतयेव तेनुः सरोजलक्ष्मीं स्थलपद्महासैः ॥ ३

निशातुषारैर्नयनाम्बुकल्पैः पत्रान्तपर्यागलदच्छबिन्दुः ।
उपारुरोदेव नदत्पतङ्गः कुमुद्वतीं तीरतरुर्दिनादौ ॥ ४

वनानि तोयानि च नेत्रकल्पैः पुष्पैः सरोजैश्च निलीनभृङ्गैः ।
परस्परां विस्मयवन्ति लक्ष्मीमालोकयांचक्रुरिवादरेण ॥ ५

गिरेर्नितम्बे मरुता विभिन्नं तोयावशेषेण हिमाभमभ्रम् ।
सरिन्मुखाभ्युच्चयमादधानं शैलाधिपस्यानुचकार लक्ष्मीम् ॥ ६

गर्जन्हरिः साम्भसि शैलकुञ्जे प्रतिध्वनीनात्मकृतान्निशम्य ।
क्रमं बबन्ध क्रमितुं सकोपः प्रतर्कयन्नन्यमृगेन्द्रनादान् ॥ ७

तिग्मांशुरश्मिच्छुरितान्यदूरात्प्राञ्चि प्रभाते सलिलान्यपश्यत् ।
गभस्तिधाराभिरिव द्रुतानि तेजांसि भानोर्भुवि सम्भृतानि ॥ ८

दिग्व्यापिनीर्लोचनलोभनीया मृजान्वयाः स्नेहमिव स्रवन्तीः ।
ऋज्वायताः शस्यविशेषपङ्क्तीस्तुतोष पश्यन् वितृणान्तरालाः ॥ ९

वियोगदुःखानुभवानभिज्ञैः काले नृपांशं विहितं ददद्भिः ।
आहार्यशोभारहितैरमायैरैक्षिष्ट पुम्भिः प्रचितान्स गोष्ठान् ॥ १०

विचित्रमुच्चैः प्लवमानमारात्कुतूहलं त्रस्नु ततान तस्य ।
मेघात्ययोपात्तवनोपशोभं कदम्बकं वातमजं मृगाणाम् ॥ ११

सितारविन्दप्रचयेषु लीनाः संसक्तफेनेषु च सैकतेषु ।
कुन्दावदाताः कलहंसमालाः प्रतीयिरे श्रोत्रसुखैर्निनादैः ॥ १२

न तज्जलं यन्न सुचारुपङ्कजं
न पङ्कजं तद्यदलीनषट्पदम् ।
न षट्पदोऽसौ न जुगुञ्ज यः कलं
न गुञ्जितं तन्न जहार यन्मनः ॥ १३

Bhaṭṭikāvya II.

---

## XVII

### PRINCE ŚAUDDHODANI ( GAUTAMA BUDDHA ) CATCHES THE FIRST GLIMPSES OF HUMAN MISERY

ततः कदाचिन्मृदुशाद्वलानि पुंस्कोकिलोन्नादितपादपानि ।
शुश्राव पद्माकरमण्डितानि शीते निबद्धानि स काननानि ॥ १

श्रुत्वा ततः स्त्रीजनवल्लभानां मनोज्ञभावं पुरकाननानाम् ।
बहिः प्रयाणाय चकार बुद्धिमन्तर्गृहे नाग इवावरुद्धः ॥ २

ततो नृपस्तस्य निशम्य भावं पुत्राभिधानस्य मनोरथस्य ।
स्नेहस्य लक्ष्म्या वयसश्च योग्यामाज्ञापयामास विहारयात्राम् ॥ ३

निवर्तयामास च राजमार्गे सम्पातमार्तस्य पृथग्जनस्य ।
मा भूत्कुमारः सुकुमारचित्तः संविग्नचेता इव मन्यमानः ॥ ४

प्रत्यङ्गहीनान् विकलेन्द्रियांश्च जीर्णातुरादीन् कृपणांश्च भिक्षून् ।
ततः समुत्सार्य परेण साम्ना शोभां परां राजपथस्य चक्रुः ॥ ५

ततः कृते श्रीमति राजमार्गे श्रीमान् विनीतानुचरः कुमारः ।
प्रासादपृष्ठादवतीर्य काले कृताभ्यनुज्ञो नृपमभ्यगच्छत् ॥ ६

अथो नरेन्द्रः सुतमागताश्रुः शिरस्युपाघ्राय चिरं निरीक्ष्य ।
गच्छेति चाज्ञापयति स्म वाचा स्नेहान्न चैनं मनसा मुमोच ॥ ७

ततः स जाम्बूनदभाण्डभृद्भिर्युक्तं चतुर्भिर्निभृतैस्तुरङ्गैः ।
अक्लीबविद्वच्छुचिरश्मिधारं हिरण्मयं स्यन्दनमारुरोह ॥ ८

ततः प्रकीर्णोज्ज्वलपुष्पजालं विषक्तमाल्यं प्रचलत्पताकम् ।
मार्गं प्रपेदे सदृशानुयात्रश्चन्द्रः सनक्षत्र इवान्तरिक्षम् ॥ ९

कौतूहलात्स्फीततरैश्च नेत्रैर्नीलोत्पलार्धैरिव कीर्यमाणः ।
शनैः शनै राजपथं जगाहे पौरैः समन्तादभिवीक्ष्यमाणः ॥ १०

पुरं तु तत्स्वर्गमिव प्रहृष्टं शुद्धाधिवासाः समवेक्ष्य देवाः ।
जीर्णं नरं निर्ममिरे प्रयातुं सञ्चोदनार्थं क्षितिपात्मजस्य ॥ ११

ततः कुमारो जरयाऽभिभूतं दृष्ट्वा नरेभ्यः पृथगाकृतिं तम् ।
उवाच संग्राहकमागतास्थस्तत्रैव निष्कम्पनिविष्टदृष्टिः ॥ १२

क एष भोः सूत नरोऽभ्युपेतः केशैः सितैर्यष्टिविषक्तहस्तः ।
भ्रूसंवृताक्षः शिथिलानताङ्गः किं विक्रियैषा प्रकृतिर्यदृच्छा ॥ १३

इत्येवमुक्तः स रथप्रणेता निवेदयामास नृपात्मजाय ।
संरक्ष्यमप्यर्थमदोषदर्शी तैरेव देवैः कृतबुद्धिमोहः ॥ १४

रूपस्य हर्त्री व्यसनं बलस्य शोकस्य योनिर्निधनं रतीनाम् ।
नाशः स्मृतीनां रिपुरिन्द्रियाणामेषा जरा नाम ययैष भग्नः ॥ १५

पीतं ह्यनेनापि पयः शिशुत्वे कालेन भूयः परिमृष्टमुर्व्याम् ।
क्रमेण भूत्वा च युवा वपुष्मान् क्रमेण तेनैव जरामुपेतः ॥ १६

इत्येवमुक्ते चलितः स किंचिद्राजात्मजः सूतमिदं बभाषे ।
किमेष दोषो भविता ममापीत्यस्मै ततः सारथिरभ्युवाच ॥ १७

आयुष्मतोऽप्येष वयःप्रकर्षो निःसंशयं कालवशेन भावी ।
एवं जरां रूपविनाशयित्रीं जानाति चैवेच्छति चैष लोकः ॥ १८

ततः स पूर्वाशयशुद्धबुद्धिर्विस्तीर्णकल्पाचितपुण्यकर्मा ।
श्रुत्वा जरां संविविजे महात्मा महाशनेर्घोषमिवान्तिके गौः ॥ १९

निःश्वस्य दीर्घं स शिरः प्रकम्प्य तस्मिंश्च जीर्णे विनिवेश्य चक्षुः ।
तां चैव दृष्ट्वा जनतां सहर्षां वाक्यं ससंविग्नमिदं जगाद ॥ २०

एवं जरा हन्ति च निर्विशेषं स्मृतिं च रूपं च पराक्रमं च ।
न चैव संवेगमुपैति लोकः प्रत्यक्षतोऽपीदृशमीक्षमाणः ॥ २१

एवं गते सूत निवर्तयाश्वान् शीघ्रं गृहाण्येव भवान्प्रयातु ।
उद्यानभूमौ हि कुतो रतिर्मे जराभवे चेतसि वर्तमाने ॥ २२

अथाज्ञया भर्तृसुतस्य तस्य निवर्तयामास रथं नियन्ता ।
ततः कुमारो भवनं तदेव चिन्तावशः शून्यमिव प्रपेदे ॥ २३

यदा तु तत्रैव न शर्म लेभे जरा जरेति प्रपरीक्षमाणः ।
ततो नरेन्द्रानुमतः स भूयः क्रमेण तेनैव बहिर्जगाम ॥ २४

अथापरं व्याधिपरीतदेहं त एव देवाः ससृजुर्मनुष्यम् ।
दृष्ट्वा च तं सारथिमाबभाषे शौद्धोदनिस्तद्गतदृष्टिरेव ॥ २५

स्थूलोदरः श्वासचलच्छरीरः स्रस्तांसबाहुः कृशपाण्डुगात्रः ।
अम्बेति वाचं करुणं ब्रुवाणः परं समाश्लिष्य नरः क एषः ॥ २६

ततोऽब्रवीत्सारथिरस्य सौम्य धातुप्रकोपप्रभवः प्रवृद्धः ।
रोगाभिधानः सुमहाननर्थः शक्रोऽपि येनैष कृतोऽस्वतन्त्रः ॥ २७

इत्यूचिवान्राजसुतः स भूयस्तं सानुकम्पो नरमीक्षमाणः ।
अस्यैव जातः पृथगेष दोषः सामान्यतो रोगभयं प्रजानाम् ॥ २८

ततो बभाषे स रथप्रणेता कुमार साधारण एष दोषः ।
एवं हि रोगैः परिपीड्यमानो रुजातुरो हर्षमुपैति लोकः ॥ २९

इति श्रुतार्थः स विषण्णचेताः प्रावेपताम्बूर्मिगतः शशीव ।
इदं च वाक्यं करुणायमानः प्रोवाच किंचिन्मृदुना स्वरेण ॥ ३०

इदं च रोगव्यसनं प्रजानां पश्यंश्च विश्रम्भमुपैति लोकः ।
विस्तीर्णविज्ञानमहो नराणां हसन्ति ये रोगभयैरमुक्ताः ॥ ३१
निवर्त्यतां सूत बहिःप्रयाणान्नरेन्द्रसद्मैव रथः प्रयातु ।
श्रुत्वा च मे रोगभयं रतिभ्यः प्रत्याहतं सङ्कुचतीव चेतः ॥ ३२

Buddhacharita III.

---

## XVIII

### A DEVOTEE INVOKES THE GRACE OF GOD

अयि दीनतरं दयानिधे दुरवस्थं सकलैः समुज्झितम् ।
अधुनाऽपि न मां निभालयन्भजसे हा कथमश्मचित्तताम् ॥ १
नितरां विनयेन पृच्छते सुविचार्योत्तरमत्र यच्छ मे ।
करितो गिरितोऽप्यहं गुरुस्त्वरितो नोद्धरसे यदद्य माम् ॥ २
न धनं न च राज्यसम्पदं नहि विद्यामिदमेकमर्थये ।
मयि धेयि मनागपि प्रभो करुणाभङ्गितरङ्गितां दृशम् ॥ ३
अयमत्यधमोऽपि निर्गुणो दयनीयो भवता दयानिधे ।
वमतां फणिनां विषानलं किमु नानन्दयिता हि चन्दनः ॥ ४
सततं निगमेषु शृण्वता वरद त्वां पतितानुपावनम् ।
पुरु पापमुपास्यतेऽनिशं त्वयि विश्वासधिया मया विभो ॥ ५
सुकृतं न कृतं पुरा कदाप्यथ सर्वं कृतमेव दुष्कृतम् ।
अधुना गलितह्रिया मया भगवंस्त्वां प्रति किं निगद्यताम् ॥ ६
अयि गर्तमुखे नतः शिशुः पथिकेनापि निवार्यते जवात् ।
जनकेन पतन्भवार्णवे न निवार्यो भवता कथं विभो ॥ ७
पतितोऽप्यतिदुर्गतोऽपि सन्नकृतज्ञो निखिलागसां पदम् ।
भवदीय इतीरयंस्त्वया दयनीयस्त्रपयैव केवलम् ॥ ८

वाचा निर्मलया सुधामधुरया यां नाथ शिक्षामदा-
स्तां स्वप्नेपि न संस्मराम्यहमहम्भावावृतो निस्त्रपः ।
इत्यागःशतशालिनं पुनरपि स्वीयेषु मां बिभ्रत-
स्त्वत्तो नास्ति दयानिधिर्यदुपते मत्तो न मत्तः परः ॥ ९

पातालं व्रज याहि वा सुरपुरीमारोह मेरोः शिरः
पारावारपरम्परां तर तथाप्याशा न शाम्येत्तव ।
आधिव्याधिजरापराहत यदि क्षेमं निजं वाञ्छसि
श्रीकृष्णेति रसायनं रसय रे शून्यैः किमन्यैः श्रमैः ॥ १०

Karuṇālaharī of Jagannātha.

---

## XIX

### A DESCRIPTION OF THE HIMĀLAYAS

अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः ।
पूर्वापरौ तोयनिधी वगाह्य स्थितः पृथिव्या इव मानदण्डः ॥ १

अनन्तरत्नप्रभवस्य यस्य हिमं न सौभाग्यविलोपि जातम् ।
एको हि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्कः ॥ २

आमेखलं सञ्चरतां घनानां छायामधःसानुगत निषेव्य ।
उद्वेजिता वृष्टिभिराश्रयन्ते शृङ्गाणि यस्यातपवन्ति सिद्धाः ॥ ३

पदं तुषारस्रुतिधौतरक्तं यस्मिन्नदृष्ट्वापि हतद्विपानाम् ।
विदन्ति मार्गं नखरन्ध्रमुक्तैर्मुक्ताफलैः केसरिणां किराताः ॥ ४

यः पूरयन् कीचकरन्ध्रभागान् दरीमुखोत्थेन समीरणेन ।
उद्गास्यतामिच्छति किन्नराणां तानप्रदायित्वमिवोपगन्तुम् ॥ ५

कपोलकण्डूः करिभिर्विनेतुं विघट्टितानां सरलद्रुमाणाम् ।
यत्र स्रुतक्षीरतया प्रसूतः सानूनि गन्धः सुरभीकरोति ॥ ६

दिवाकराद्रक्षति यो गुहासु लीनं दिवाभीतमिवान्धकारम् ।
क्षुद्रेऽपि नूनं शरणं प्रपन्ने ममत्वमुच्चैःशिरसामतीव ॥ ७

लाङ्गूलविक्षेपविसर्पिशोभैरितस्ततश्चन्द्रमरीचिगौरैः ।
यस्यार्थयुक्तं गिरिराजशब्दं कुर्वन्ति बालव्यजनैश्चमर्यः ॥ ८

भागीरथीशीकरनिर्झराणां वोढा मुहुः कम्पितदेवदारुः ।
यद्वायुरन्विष्टमृगैः किरातैरासेव्यते भिन्नशिखण्डिबर्हः ॥ ९

यज्ञाङ्गयोनित्वमवेक्ष्य यस्य सारं धरित्रीधरणक्षमं च ।
प्रजापतिः कल्पितयज्ञभागं शैलाधिपत्यं स्वयमन्वतिष्ठत् ॥ १०

Kumārasambhava I.

---

## XX

## ŚAKUNTALĀ BIDS FAREWELL TO HER FATHER

**काश्यपः**—( ततः प्रविशति स्नानोत्तीर्णः काश्यपः )

यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया
कण्ठः स्तम्भितबाष्पवृत्तिकलुषश्चिन्ताजडं दर्शनम् ।
वैक्लव्यं मम तावदीदृशमिदं स्नेहादरण्यौकसः
पीड्यन्ते गृहिणः कथं नु तनयाविश्लेषदुःखैर्नवैः ॥ १

( इति परिक्रामति )

**सख्यौ**—हला शकुन्तले, अवसितमण्डनासि । परिधत्स्व सांप्रतं क्षौमयुगलम् ।

( शकुन्तलोत्थाय परिधत्ते )

**गौतमी**—जाते, एष त आनन्दपरिवाहिणा चक्षुषा परिष्वजमान इव गुरुरुपस्थितः । आचारं तावत्प्रतिपद्यस्व ।

**शकुन्तला**—( सव्रीडम् ) तात वन्दे ।

**काश्यपः**—वत्से,

ययातेरिव शर्मिष्ठा भर्तुर्बहुमता भव ।
सुतं त्वमपि सम्राजं सेव पूरुमवाप्नुहि ॥ २

**गौतमी**—भगवन्, वरः खल्वेषः । नाशीः ।

**काश्यपः**—वत्से, इतः सद्योहुताग्नीन्प्रदक्षिणीकुरुष्व ।

( सर्वे परिक्रामन्ति )

**काश्यपः**—( ऋक्छन्दसाऽऽशास्ते )

अमी वेदिं परितः कॢप्तधिष्ण्याः समिद्वन्तः प्रान्तसंस्तीर्णदर्भाः ।
अपघ्नन्तो दुरितं हव्यगन्धैर्वैतानास्त्वां वह्नयः पावयन्तु ॥ ३

प्रतिष्ठस्वेदानीम् । ( सदृष्टिक्षेपम् ) क्व ते शार्ङ्गरवमिश्राः ।

( प्रविश्य )

**शिष्यः**—भगवन्, इमे स्मः ।

**काश्यपः**—भगिन्यास्ते मार्गमादेशय ।

**शार्ङ्गरवः**—इत इतो भवती ।

( सर्वे परिक्रामन्ति )

**काश्यपः**—भो भोः संनिहितास्तपोवनतरवः,

पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु या
नादत्ते प्रियमण्डनाऽपि भवतां स्नेहेन या पल्लवम् ।
आद्ये वः कुसुमप्रसूतिसमये यस्या भवत्युत्सवः
सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम् ॥ ४

( कोकिलरवं सूचयित्वा )

अनुमतगमना शकुन्तला तरुभिरियं वनवासबन्धुभिः ।
परभृतविरुतं कलं यथा प्रतिवचनीकृतमेभिरीदृशम् ॥

**शकुन्तला**—( जनान्तिकम् ) हला प्रियंवदे, नन्वार्यपुत्रदर्शनोत्सुकाया अप्याश्रमपदं परित्यजन्त्या दुःखेन मे चरणौ पुरतः प्रवर्तेते ।

**प्रियंवदा**—न केवलं तपोवनविरहकातरा सख्येव । त्वयोपस्थितविरहस्य तपोवनस्यापि तावत्समवस्था दृश्यते ।

उद्गलितदर्भकवला मृगाः परित्यक्तनर्तना मयूराः ।
अपसृतपाण्डुपत्रा मुञ्चन्त्यश्रूणीव लताः ॥ ६

**शकुन्तला**—तात, लताभगिनीं वनज्योत्स्नां तावदामन्त्रयिष्ये ।

**काश्यपः**—अवैमि ते तस्यां सोदर्यस्नेहम् । इयं तावद्दक्षिणेन ।

**शकुन्तला**—( लतामुपेत्य ) वनज्योत्स्ने, चूतसङ्गताऽपि मां प्रत्यालिङ्गेतोगताभिः शाखाबाहाभिः । अद्यप्रभृति दूरपरिवर्तिनी भविष्यामि ।

**काश्यपः**—

सङ्कल्पितं प्रथममेव मया तवार्थे
भर्तारमात्मसदृशं सुकृतैर्गता त्वम् ।
चूतेन संश्रितवती नवमालिकेय-
मस्यामहं त्वयि च संप्रति वीतचिन्तः ॥ ७

इतः पन्थानं प्रतिपद्यस्व ।

**शकुन्तला**—( सख्यौ प्रति ) हला, एषा द्वयोर्युवयोर्हस्ते निक्षेपः ।

**सख्यौ**—अयं जनः कस्य हस्ते समर्पितः । ( इति बाष्पं विहरतः )

**काश्यपः**—अनसूये, अलं रुदित्वा । ननु भवतीभ्यामेव स्थिरीकर्तव्या शकुन्तला ।

**शार्ङ्गरवः**—भगवन्, उदकान्तं यावत्स्निग्धो जनोऽनुगन्तव्य इति श्रूयते। तदिदं सरस्तीरम्। अत्र सन्दिश्य प्रतिगन्तुमर्हसि।

**काश्यपः**—तेन हीमां क्षीरवृक्षच्छायामाश्रयामः।

( सर्वे परिक्रम्य स्थिताः )

**काश्यपः**—किं नु खलु तत्रभवतो दुष्यन्तस्य युक्तरूपमस्माभिः सन्देष्टव्यम्। ( इति चिन्तयति )। ( प्रकाशम् ) शार्ङ्गरव, इति त्वया मद्वचनात्स राजा शकुन्तलां पुरस्कृत्य वक्तव्यः।

**शार्ङ्गरवः**—आज्ञापयतु भवान्।

**काश्यपः**—

अस्मान्साधु विचिन्त्य संयमधनानुच्चैः कुलं चात्मन-
स्त्वय्यस्याः कथमप्यबान्धवकृतां स्नेहप्रवृत्तिं च ताम्।
सामान्यप्रतिपत्तिपूर्वकमियं दारेषु दृश्या त्वया
भाग्यायत्तमतःपरं न खलु तद्वाच्यं वधूबन्धुभिः॥ ८

**शार्ङ्गरवः**—गृहीतः सन्देशः।

**काश्यपः**—वत्से, त्वमिदानीमनुशासनीयाऽसि। वनौकसोऽपि सन्तो लौकिकज्ञा वयम्।

**शार्ङ्गरवः**—न खलु धीमतां कश्चिदविषयो नाम।

**काश्यपः**—सा त्वमितः पतिकुलं प्राप्य

शुश्रूषस्व गुरून्कुरु प्रियसखीवृत्तिं सपत्नीजने
भर्तुर्विप्रकृताऽपि रोषणतया मास्म प्रतीपं गमः।
भूयिष्ठं भव दक्षिणा परिजने भाग्येष्वनुत्सेकिनी
यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः॥ ९

कथं वा गौतमी मन्यते।

**गौतमी**—एतावान्वधूजनस्योपदेशः । जाते, एतत्खलु सर्वमवधारय ।

**काश्यपः**—वत्से, परिष्वजस्व मां सखीजनं च ।

**शकुन्तला**—तात, इत एव किं प्रियंवदामिश्राः सख्यो निवर्तिष्यन्ते ।

**काश्यपः**—वत्से, इमे अपि प्रदेये । न युक्तमनयोस्तत्र गन्तुम् । त्वया सह गौतमी यास्यति ।

**शकुन्तला**—( पितरमाश्लिष्य ) कथमिदानीं तातस्याङ्कात्परिभ्रष्टा मलयतटोन्मूलिता चन्दनलतेव देशान्तरे जीवितं धारयिष्यामि ।

**काश्यपः**—वत्से किमेवं कातराऽसि ।

अभिजनवतो भर्तुः श्लाघ्ये स्थिता गृहिणीपदे
विभवगुरुभिः कृत्यैस्तस्य प्रतिक्षणमाकुला ।
तनयमचिरात्प्राचीवार्कं प्रसूय च पावनं
मम विरहजां न त्वं वत्से शुचं गणयिष्यसि ॥ १०

( शकुन्तला पितुः पादयोः पतति )

**काश्यपः**—यदिच्छामि ते तदस्तु ।

**शकुन्तला**—( सख्यावुपेत्य ) हला, द्वे अपि मां सममेव परिष्वजेथाम् ।

**सख्यौ**—( तथा कृत्वा ) सखि, यदि नाम स राजा प्रत्यभिज्ञानमन्थरो भवेत्ततस्तस्येदमात्मनामधेयाङ्कितमङ्गुलीयकं दर्शय ।

**शकुन्तला**—अनेन सन्देहेन वामाकम्पितास्मि ।

**सख्यौ**—मा भैषीः । स्नेहः पापशङ्की ।

**शार्ङ्गरवः**—युगान्तरमारूढः सविता । त्वरतामत्रभवती ।

**शकुन्तला**—( आश्रमाभिमुखी स्थित्वा ) तात, कदा नु भूयस्तपोवनं प्रेक्षे ।

**काश्यपः**—श्रूयताम् ।

भूत्वा चिराय चतुरन्तमहीसपत्नी
दौष्यन्तिमप्रतिरथं तनयं निवेश्य ।
भर्त्रा तदर्पितकुटुम्बभरेण सार्धं
शान्ते करिष्यसि पदं पुनराश्रमेऽस्मिन् ॥ ११

**गौतमी**—जाते, परिहीयते गमनवेला । निवर्तय पितरम् । अथवा चिरेणापि पुनः पुनरेष एवं मन्त्रयिष्यते । निवर्ततां भवान् ।

**काश्यपः**—वत्से, उपरुध्यते तपोऽनुष्ठानम् ।

**शकुन्तला**—( भूयः पितरमाश्लिष्य ) तपश्चरणपीडितं तातशरीरम् । तन्मातिमात्रं मम कृते उत्कण्ठितुम् ।

**काश्यपः**—( सनिःश्वासम् )

शममेष्यति मम शोकः कथं नु वत्से त्वया रचितपूर्वम् ।
उटजद्वारविरूढं नीवारबलिं विलोकयतः ॥ १२

गच्छ । शिवास्ते पन्थानः सन्तु ।

( निष्क्रान्ता शकुन्तला सहयायिनश्च )

**सख्यौ**—( शकुन्तलां विलोक्य ) हा धिक् हा धिक् ।

अन्तर्हिता शकुन्तला वनराज्या ।

**काश्यपः**—अनसूये, गतवती वां सहधर्मचारिणी । निगृह्य शोकमनुगच्छतं मां प्रस्थितम् ।

**सख्यौ**—तात शकुन्तलाविरहितं शून्यमिव तपोवनं कथं प्रविशामः ।

**काश्यपः**—स्नेहप्रवृत्तिरेवंदर्शिनी । ( सविमर्शं परिक्रम्य ) हन्त भोः शकुन्तलां पतिकुलं विसृज्य लब्धमिदानीं स्वास्थ्यम् । कुतः ।

अर्थो हि कन्या परकीय एव
तामद्य संप्रेष्य परिग्रहीतुः ।
जातो ममायं विशदः प्रकामं
प्रत्यर्पितन्यास इवान्तरात्मा ॥ १३

( इति निष्क्रान्ताः सर्वे )

Abhijñānaśākuntala IV.

---

## XXI

### MAHĀRĀSHṬRA AS IT APPEARED TO MADRAS OBSERVERS ABOUT 1640 A. D.

**विश्वावसुः**—

महाराष्ट्राभिख्यो मधुरजलसान्द्रो निरुपमः
प्रकाशो देशोऽयं सुरपुरनिकाशो विजयते ।
गृहस्था यत्रामी गुणजलधयः केऽपि विभवैः
समृद्धाः श्रद्धातो मुहुरतिथिपूजां विदधते ॥ १

**कृशानुः**—सखे किं प्राक्कालीनचरित्रमधुना कथयसि । अधुना किल कलिमालिन्यादीदृशी रीतिरेतद्देशवासिनामासीत् ।

तथाहि—

अपारैर्व्यापारैरहरिह नयन्तोऽशनदशा-
स्त्वथ स्नाताः सन्ध्यां विदधति न जातु स्वसमये !

त्यजन्तः स्वां वृत्तिं द्विजकुलभवा ग्रामगणकी-
भवन्तो हन्तामी कथमपि च जीवन्ति बहवः ॥ २

किंच ।

उपनयनविवाहावुत्सवैकप्रधानौ
कलिविभवत एषां कालभेदानभिज्ञौ ।
विजहति न कदाचिद्वेदपाठैकयोग्ये
वयसि च यवनानीवाचनाभ्यासमेते ॥ ३

अपि च

अज्ञानामविरामलौकिकवचोभाजाममीषां पुन-
र्मन्त्रोच्चारण एव पर्यवसितं मौनव्रतं कर्मसु ।
ग्रामायव्ययलेखनेन नयतां कालानशेषानहो
पारम्पर्यत ईदृशामिह नृणां ब्राह्मण्यमन्यादृशम् ॥ ४

अहो बत कलिमहिम्ना सदसद्विवेकवैधुर्यमखिलजनानाम् ।
ये मुष्णन्ति निशि प्रविश्य भवनं ये वा बलात्काननं
नैते स्वामिधनं हरन्ति ननु तान्निन्दन्ति चोरा इति ।
सद्यो हन्त हरन्ति पोषकधनं संख्यां विपर्यस्य ये
कष्टं तानपि वञ्चकानिह पुरस्कुर्वन्ति सर्वे जनाः ॥ ५

' अयं खल्वनुपमो देशः ' इति त्वदुक्तं युक्तमेव । यदत्र स्वल्पे-
नापि यत्नेन महती प्रतिष्ठा सिध्यति ।

वेदव्यासः स हि दश च यो वेद वेदाक्षराणि
श्लोकं त्वेकं परिपठति यः स स्वयं जीव एव ।
आपस्तम्बः स किल कलयेत्सम्यगौपासनं यः
कष्टं शिष्टक्षतिकृति कलौ कार्श्यमृच्छन्ति विद्याः ॥ ६

**विश्वावसुः**—किमरे भूसुरेष्वेवं दोषमुद्घोषयसि ।

अत्रापि सन्ति बहवः कलिताग्निहोत्राः
शास्त्रार्थबोधकुशलाः किल शान्तिमन्तः ।
अन्तर्मुखाः सततमात्मविदो महान्तो
निर्धूतबाह्यविषया निगमाध्वनिष्ठाः ॥ ७

अन्यच्च—

शुचीभूताः स्नानैः श्रुतहितपुराणाश्च नियमा-
दपूतानां स्पर्शानवहितहृदोऽमी विजहतः ।
सुराभ्यर्चां कृत्वा शुचिकृतमदन्त्यन्नमनघं
महाराष्ट्रे देशे विलसति महानेष हि गुणः ॥ ८

किंच—

चमूनियमनेन वा जनपदाधिकारेण वा
द्विजव्रज उपव्रजन्प्रभुपदं महाराष्ट्रजः ।
न वृत्तिमिह पालयेद्यदि धरासुराणां ततो
भवेद्यवनवेष्टितं भुवनमेतदब्राह्मणम् ॥ ९

यच्च दोषान्तरं भवता परिभाषितं तदशेषमपि साधुजनोपकारेण परिहीयते ।

**कृशानुः**—अस्त्वेवमथाप्यत्रत्यानामाद्येतरवर्णप्रभवानां पुनरति-दुःसहं चेष्टितम् ।

देशे देशे लम्पटाः पर्यटन्तो भङ्क्त्वा भङ्क्त्वा ब्राह्मणादीनशेषान् ।
हारं हारं हन्त सर्वस्वमेषां पापा एते स्वोदरं पूरयन्ति ॥ १०

**विश्वावसुः**—सत्यमेवमथापि महनीयमेव तेषामेवं चेष्टितम् ।

तथाहि—

मायाचुञ्चुतया भयावहगतिः प्रत्यर्थिपृथ्वीभुजां
माहाराष्ट्रभटच्छटा रणपटुर्नो पर्यटाच्येत चेत् ।
देवब्राह्मणवर्गनिग्रहकृतो देशांस्तुरुष्का इमे
निष्प्रत्यूहमनोरथा वितनुयुर्निर्देवभूमीसुरान् ॥ ११

Viśvaguṇādarśachampû.

---

# XXII

## MISCELLANEOUS VERSES

### सरस्वतीप्रशंसा.

करबदरसदृशमखिलं भुवनतलं यत्प्रसादतः कवयः ।
पश्यन्ति सूक्ष्ममतयः सा जयति सरस्वती देवी ॥ १

सुबन्धोः

गौर्गौः कामदुधा सम्यक्प्रयुक्ता स्मर्यते बुधैः ।
दुष्प्रयुक्ता पुनर्गोत्वं प्रयोक्तुः सैव शंसति ॥ २

दण्डिनः

शारदा शारदाम्भोजवदना वदनाम्बुजे ।
सर्वदा सर्वदाऽस्माकं संनिधिं संनिधिं क्रियात् ॥ ३

या कुन्देन्दुतुषारहारधवला या शुभ्रवस्त्रावृता
या वीणावरदण्डमण्डितकरा या श्वेतपद्मासना ।
या ब्रह्माच्युतशङ्करप्रभृतिभिर्देवैः सदा वन्दिता
सा मां पातु सरस्वती भगवती निःशेषजाड्यापहा ॥ ४

## काव्यप्रशंसा.

अविदितगुणाऽपि सत्कविभणितिः कर्णेषु वमति मधुधाराम् ।
अनधिगतपरिमलाऽपि हि हरति दृशं मालतीमाला ॥ ५ सुबन्धोः

कियदथवा वच्मि यतो गुरुगुणमणिसागरस्य काव्यस्य ।
कः खलु निखिलं कलयत्यलमलघुयशोनिदानस्य ॥ ६ रुद्रटस्य

धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च ।
करोति कीर्तिं प्रीतिं च साधुकाव्यनिबन्धनम् ॥ ७ भामहस्य

उपेयुषामपि दिवं सन्निबन्धविधायिनाम् ।
आस्त एव निरातङ्कं कान्तं काव्यमयं वपुः ॥ ८ भामहस्य

युवतेरिव रूपमङ्ग काव्यं स्वदते शुद्धगुणं तदप्यतीव ।
विहितप्रणयं निरन्तराभिः सदलङ्कारविकल्पकल्पनाभिः ॥ ९
वामनीयकाव्यालङ्कारे

रत्नस्य काव्यस्य च नूतनस्य तुल्यः स्वभावः प्रतिभासते मे ।
मृजाभिरेते निपुणं कृताभिः समश्नुवाते हि गुणान्तराणि ॥ १०
कृष्णानन्दस्य

## कविप्रशंसा.

अपारे काव्यसंसारे कविरेव प्रजापतिः ।
यथास्मै रोचते विश्वं तथेदं परिवर्तते ॥ ११ ध्वन्यालोके

जयन्ति ते सुकृतिनो रससिद्धाः कवीश्वराः ।
नास्ति येषां यशःकाये जरामरणजं भयम् ॥ १२ भर्तृहरेः

लङ्कापतेः सङ्कुचितं यशो यद्यत्कीर्तिपात्रं रघुराजपुत्रः ।
स सर्व एवादिकवेः प्रभावो न कोपनीयाः कवयः क्षितीन्द्रैः ॥ १३

महीपतेः सन्ति न यस्य पार्श्वे कवीश्वरास्तस्य कुतो यशांसि ।
भूपाः कियन्तो न बभूवुरुर्व्यां नामापि जानाति न कोऽपि तेषाम् १४

एतौ बिह्लणस्य ।

तत्कारितसुरसदनप्रभृतिनि नष्टे तथाहि कालेन ।
न भवेन्नामापि ततो यदि न स्युः सुकवयो राज्ञाम् ॥ १५ रुद्रटस्य

रुणद्धि रोदसी चास्य यावत्कीर्तिरनश्वरी ।
तावत्किलायमध्यास्ते सुकृती वैबुधं पदम् ॥ १६ भामहस्य

सरस्वतीविभ्रमदर्पणानां सूक्तामृतक्षीरमहोदधीनाम् ।
सन्मानसोल्लासमुधाकराणां कवीश्वराणां जयति प्रकर्षः ॥ १७

क्षेमेन्द्रस्य

ते धन्यास्ते महात्मानस्तेषां लोके स्थिरं यशः ।
यैर्निबद्धानि काव्यानि ये च काव्येषु कीर्तिताः ॥ १८
तत्त्वं किमपि काव्यानां जानाति विरलो भुवि ।
मार्मिकः को मरन्दानामन्तरेण मधुव्रतम् ॥ १९

चेतःप्रसादजननं विबुधोत्तमाना-
मानन्दि सर्वरसयुक्तमतिप्रसन्नम् ।
काव्यं खलस्य न करोति हृदि प्रतिष्ठां
पीयूषपानमिव वक्त्रविवर्ति राहोः ॥ २० हरिचन्द्रस्य

विना न साहित्यविदापरत्र
गुणः कथंचित्प्रथते कवीनाम् ।
आलम्बते तत्क्षणमम्भसीव
विस्तारमन्यत्र न तैलबिन्दुः ॥ २१

उत्फुल्लगल्लैरालापाः क्रियन्ते दुर्मुखैः सुखम् ।
जानाति हि पुनः सम्यक्कविरेव कवेः श्रमम् ॥ २२

त्रिविक्रमभट्टस्य

## विशिष्टकविप्रशंसा.

कवीन्दुं नौमि वाल्मीकिं यस्य रामायणीं कथाम् ।
चन्द्रिकामिव चिन्वन्ति चकोरा इव साधवः ॥ २३

शार्ङ्गधरस्य

स्तुमस्तमेव वाल्मीकिं यत्प्रसादात्प्रशस्यते ।
लोकैर्दाशरथं वृत्तमपि श्रवणदुःखकृत् ॥ २४

कीर्तिकौमुद्याम्

श्रवणाञ्जलिपुटपेयं विरचितवान्भारताख्यममृतं यः ।
तमहमरागमकृष्णं कृष्णद्वैपायनं वन्दे ॥ २५

भट्टनारायणस्य

व्यासगिरां निर्यासं सारं विश्वस्य भारतं वन्दे ।
भूषणतयैव संज्ञां यदङ्कितां भारती वहति ॥ २६
स नमस्यः कथं न स्यात्सतां सत्यवतीसुतः ।
सुपर्वोपचितं चक्रे यः स्वर्गमिव भारतम् ॥ २७

कीर्तिकौमुद्याम्

निर्गतासु न वा कस्य कालिदासस्य सूक्तिषु ।
प्रीतिर्मधुरसार्द्रासु मञ्जरीष्विव जायते ॥ २८ बाणस्य
भासयत्यपि भासादौ कविवर्गे जगत्रयीम् ।
के न यान्ति निबन्धारः कालिदासस्य दासताम् ॥ २९

सरस्वतीकण्ठाभरणे

कालिदासः कविर्जातः श्रीरामचरितस्य यत् ।
स एष शर्करायोगः पयसः समपद्यत ॥ ३०

कीर्तिकौमुद्याम्

जाता शिखण्डिनी प्राग्यथा शिखण्डी तथावगच्छामि ।
प्रागल्भ्यमधिकमाप्तुं वाणी बाणो बभूवेति ॥ ३१

गोवर्धनाचार्यस्य

शब्दार्थयोः समो गुम्फः पाञ्चाली रीतिरुच्यते ।
शीलभट्टारिकावाचि बाणोक्तिषु च सा यदि ॥ ३२

जाते जगति वाल्मीकौ कविरित्यभिधाऽभवत् ।
कवी इति ततो व्यासे कवयस्त्वयि दण्डिनि ॥ ३३

उपमा कालिदासस्य भारवेरर्थगौरवम् ।
दण्डिनः पदलालित्यं माघे सन्ति त्रयो गुणाः ॥ ३४

## सज्जनप्रशंसा.

वज्रादपि कठोराणि मृदूनि कुसुमादपि ।
लोकोत्तराणां चेतांसि को नु विज्ञातुमर्हति ॥ ३५

भवभूतेः

सम्पत्सु महतां चित्तं भवत्युत्पलकोमलम् ।
आपत्सु च महाशैलशिलासङ्घातकर्कशम् ॥ ३६ भर्तृहरेः

भवति सुजनत्वमधिकं विस्तारितपरगुणस्य पुरुषस्य ।
वहति विकासितकुमुदो द्विगुणरुचिं हिमकरोद्द्योतः ॥ ३७

सुबन्धोः

सुजनो न याति वैरं परहितनिरतो विनाशकालेऽपि ।

छेदेऽपि चन्दनतरुः सुरभयति मुखं कुठारस्य ॥ ३८

रविगुप्तस्य

इदं हि माहात्म्यविशेषसूचकं वदन्ति चिह्नं महतां मनीषिणः ।
मनो यदेषां सुखदुःखसम्भवे प्रयाति नो हर्षविषादवश्यताम् ॥ ३९

मेण्ठकस्य

अद्यापि नोज्झति हरः किल कालकूटं
कूर्मो बिभर्ति धरणीं खलु पृष्ठभागे ।
अम्भोनिधिर्वहति दुर्वहवाडवाग्नि-
मङ्गीकृतं सुकृतिनः परिपालयन्ति ॥ ४०

किं कूर्मस्य भरव्यथा न वपुषि क्ष्मां न क्षिपत्येष यत्
किं वा नास्ति परिश्रमो दिनपतेरास्ते न यन्निश्चलः ।
किं त्वङ्गीकृतमुत्सृजन्स्वमनसा श्लाघ्यो जनो लज्जते
निर्वाहः प्रतिपन्नवस्तुषु सतामेतद्धि गोत्रव्रतम् ॥ ४१

भर्तृहरेः

प्रियप्राया वृत्तिर्विनयमधुरो वाचि नियमः
प्रकृत्या कल्याणी मतिरनवगीतः परिचयः ।
पुरो वा पश्चाद्वा तदिदमविपर्यासितरसं
रहस्यं साधूनामनुपधि विशुद्धं विजयते ॥ ४२ भवभूतेः

पयोमुचः परीतापं हरन्त्येव शरीरिणाम् ।
नन्वात्मलाभो महतां परदुःखोपशान्तये ॥ ४३ दण्डिनः

विवेकः सह सम्पत्त्या विनयो विद्यया सह ।
प्रभुत्वं प्रश्रयोपेतं चिह्नमेतन्महात्मनाम् ॥ ४४

त्रिविक्रमभट्टस्य

## दुर्जननिन्दा.

खलः सर्षपमात्राणि परच्छिद्राणि पश्यति ।
आत्मनो बिल्वमात्राणि पश्यन्नपि न पश्यति ॥ ४५

भगवतो व्यासस्य

अहो खलभुजङ्गस्य विचित्रोऽयं वधक्रमः ।
अन्यस्य दशति श्रोत्रमन्यः प्राणैर्वियुज्यते ॥ ४६

खलः करोति दुर्वृत्तं तद्धि फलति साधुषु ।
दशाननोऽहरत्सीतां बन्धनं च महोदधेः ॥ ४७

सर्वथा व्यवहर्तव्यं कुतो ह्यवचनीयता ।
यथा स्त्रीणां तथा वाचां साधुत्वे दुर्जनो जनः ॥ ४८

भवभूतेः

विध्वस्तपरगुणानां भवति खलानामतीव मलिनत्वम् ।
अन्तरितशशिरुचामपि सलिलमुचां मलिनिमाभ्यधिकः ॥ ४९

अतिमलिने कर्तव्ये भवति खलानामतीव निपुणा धीः ।
तिमिरे हि कौशिकानां रूपं प्रतिपद्यते दृष्टिः ॥ ५०

एतौ सुबन्धोः

अन्यस्माल्लब्धपदो नीचः प्रायेण दुःसहो भवति ।
रविरपि न दहति तादृग्यादृग्दहति वालुकानिकरः ॥ ५१

अकारणाविष्कृतवैरदारुणादसज्जनात्कस्य भयं न जायते ।
विषं महाहेरिव यस्य दुर्वचः सुदुःसहं सन्निहितं सदा मुखे ॥ ५२

बाणस्य

न विषममृतीकर्तुं शक्यं प्रयत्नशतैरपि
त्यजति कटुतां न स्वां निम्बः स्थितोऽपि पयोहृदे ।

गुणपरिचितामार्यां वाणीं न जल्पति दुर्जन-
श्चिरमपि बलाध्माते लोहे कुतः कनकाकृतिः ॥ ५३

## तेजस्विप्रशंसा.

कुसुमस्तबकस्येव द्वे गती स्तो मनस्विनः ।
मूर्ध्नि वा सर्वलोकस्य शीर्यते वन एव वा ॥ ५४
भर्तृहरेः

बलवानपि निस्तेजाः कस्य नाभिभवास्पदम् ।
निःशङ्कं दीयते लोकैः पश्य भस्मचये पदम् ॥ ५५

तुल्येऽपराधे स्वर्भानुर्भानुमन्तं चिरेण हि ।
हिमांशुमाशु ग्रसते तन्म्रदिम्नः स्फुटं फलम् ॥ ५६
माघस्य

सिंहः शिशुरपि निपतति मदमलिनकपोलभित्तिषु गजेषु ।
प्रकृतिरियं सत्त्ववतां न खलु वयस्तेजसो हेतुः ॥ ५७

यदचेतनोऽपि पादैः स्पृष्टः प्रज्वलति सवितुरिनकान्तः ।
तत्तेजस्वी पुरुषः परकृतनिकृतिं कथं सहते ॥ ५८
एतौ भर्तृहरेः

किमपेक्ष्य फलं पयोधरान्ध्वनतः प्रार्थयते मृगाधिपः ।
प्रकृतिः खलु सा महीयसः सहते नान्यसमुन्नतिं यया ॥ ५९
भारवेः

न तेजस्तेजस्वी प्रसृतमपरेषां प्रसहते
स तस्य स्वो भावः प्रकृतिनियतत्वादकृतकः ।
मयूखैरश्रान्तं तपति यदि देवो दिनकरः
किमाग्नेयग्रावा निकृत इव तेजांसि वमति ॥ ६०
भवभूतेः

कौशिकेन स किल क्षितीश्वरो राममध्वरविघातशान्तये ।
काकपक्षधरमेत्य याचितस्तेजसां हि न वयः समीक्ष्यते ॥ ६१
कालिदासस्य

ज्वलितं न हिरण्यरेतसं चयमास्कन्दति भस्मनां जनः ।
अभिभूतिभयादसूनतः सुखमुज्झन्ति न धाम मानिनः ॥ ६२
भारवेः

## दैवपुरुषकारप्रभावः

द्वीपादन्यस्मादपि मध्यादपि जलनिधेर्दिशोप्यन्तात् ।
आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः ॥ ६३
रत्नावल्याम्

भगवन्तौ जगन्नेत्रे सूर्याचन्द्रमसावपि ।
पश्य गच्छत एवास्तं नियतिः केन लङ्घ्यते ॥ ६४
दण्डिनः

दैवं पुरुषकारेण कोऽतिवर्तितुमर्हति ।
विधातृविहितं मार्गं न कश्चिदतिवर्तते ॥ ६५
भगवतो वाल्मीकेः

प्रतिकूलतामुपगते हि विधौ विफलत्वमेति बहुसाधनता ।
अवलम्बनाय दिनभर्तुरभून्न पतिष्यतः करसहस्रमपि ॥ ६६
माघस्य

सोढश्चिरं राक्षसमध्यवासस्त्यागो द्वितीयश्च सुदुःसहोऽस्याः ।
को नाम पाकाभिमुखस्य जन्तोर्द्वाराणि दैवस्य पिधातुमीष्टे ॥ ६७
भवभूतेः

खल्वाटो दिवसेश्वरस्य किरणैः सन्तापितो मस्तके
वाञ्छन्देशमनातपं विधिवशात्तालस्य मूलं गतः ।

तत्राप्यस्य महाफलेन पतता भग्नं सशब्दं शिरः ।
प्रायो गच्छति यत्र भाग्यरहितस्तत्रैव यान्त्यापदः ॥ ६८

भर्तृहरेः

ईशः करस्थीकृतकाञ्चनाद्रिः कुबेरमित्रं रजताचलस्थः ।
तथापि भिक्षाटनमस्य जातं विधौ शिरःस्थे कुटिले कुतः श्रीः ॥ ६९

विश्वगुणादर्शे

दैवं पुरुषकारेण साध्यसिद्धिनिबन्धनम् ।
योऽतिक्रमितुमिच्छेत स लोके नावसीदति ॥ ७०

निपानमिव मण्डूकाः सरः पूर्णमिवाण्डजाः ।
सोद्योगं नरमायान्ति विवशाः सर्वसम्पदः ॥ ७१

पूर्वजन्मजनितं पुराविदः कर्म दैवमिति संप्रचक्षते ।
उद्यमेन तदुपार्जितं चिराद्दैवमुद्यमवशं न तत्कथम् ॥ ७२

नालम्बते दैष्टिकतां न निषीदति पौरुषे ।
शब्दार्थौ सत्कविरिव द्वयं विद्वानपेक्षते ॥ ७३

माघस्य

दैवे पुरुषकारे च कर्मसिद्धिर्व्यवस्थिता ।
तत्र दैवमभिव्यक्तं पौरुषं पौर्वदेहिकम् ॥ ७४

भगवतो याज्ञवल्क्यस्य

अन्यद्युरथ भूपाले जयोद्योगकथान्तरे ।
पौरुषं दैवसफलं प्राह यौगन्धरायणः ॥ ७५ क्षेमेन्द्रस्य

## शीलप्रशंसा.

अद्रोहः सर्वभूतेषु कर्मणा मनसा गिरा ।
अनुग्रहश्च दानं च शीलमेतद्विदुर्बुधाः ॥ ७६

विदेशेषु धनं विद्या व्यसनेषु धनं मतिः ।
परलोके धनं धर्मः शीलं सर्वत्र वै धनम् ॥ ७७

अयं क्षेमेन्द्रस्य

किं कुलेनोपदिष्टेन शीलमेवात्र कारणम् ।
भवन्ति नितरां स्फीताः सुक्षेत्रे कण्टकिद्रुमाः ॥ ७८

शूद्रकस्य

ऐश्वर्यस्य विभूषणं सुजनता शौर्यस्य वाक्संयमो
ज्ञानस्योपशमः श्रुतस्य विनयो वित्तस्य पात्रे व्ययः ।
अक्रोधस्तपसः क्षमा प्रभवतो धर्मस्य निर्व्याजता
सर्वेषामपि सर्वकारणमिदं शीलं परं भूषणम् ॥ ७९

भर्तृहरेः

# संस्कृतपद्यावलिः

## PART SECOND

### I

### THE IRATE DURVĀSAS PLEASED WITH DURYODHANA'S ASSIDUOUS HOSPITALITY GRANTS HIM A BOON

नानोपायैरघं तेषु चिन्तयत्सु दुरात्मसु ।
अभ्यागच्छत्स धर्मात्मा तपस्वी सुमहायशाः ॥ १

शिष्यायुतसमोपेतो दुर्वासा नाम कामतः ।
तमागतमभिप्रेक्ष्य मुनिं परमकोपनम् ॥ २

दुर्योधनो विनीतात्मा प्रश्रयेण दमेन च ।
सहितो भ्रातृभिः श्रीमानातिथ्येन न्यमन्त्रयत् ॥ ३

विधिवत्पूजयामास स्वयं किङ्करवत्स्थितः ।
अहानि कतिचित्तत्र तस्थौ स मुनिसत्तमः ॥ ४

तं च पर्यचरद्राजा दिवारात्रमतन्द्रितः ।
दुर्योधनो महाराज शापात्तस्य विशङ्कितः ॥ ५

क्षुधितोऽस्मि ददस्वान्नं शीघ्रं मम नराधिप ।
इत्युक्त्वा गच्छति स्नातुं प्रत्यागच्छति वै चिरात् ॥ ६

न भोक्ष्याम्यद्य मे नास्ति क्षुधेत्युक्त्वैत्यदर्शनम् ।
अकस्मादेत्य च ब्रूते भोजयास्मांस्त्वरान्वितः ॥ ७

कदाचिच्च निशीथे स उत्थाय निष्कृतौ स्थितः ।
पूर्ववत्कारयित्वाऽन्नं न भुङ्क्ते गर्हयन्स्म सः ॥ ८
वर्तमाने तथा तस्मिन्यदा दुर्योधनो नृपः ।
विकृतिं नैति न क्रोधं तदा तुष्टोऽभवन्मुनिः ॥ ९
आह चैनं दुराधर्षो वरदोऽस्मीति भारत ।
वरं वरय भद्रं ते यत्ते मनसि वर्तते ॥ १०
मयि प्रीते तु यद्धर्म्यं नालभ्यं विद्यते तव ।
एतच्छ्रुत्वा वचस्तस्य महर्षेर्भावितात्मनः ।
अमन्यत पुनर्जातमात्मानं स सुयोधनः ॥ ११
प्रागेव मन्त्रितं चासीत्कर्णदुःशासनादिभिः ।
याचनीयं मुनेस्तुष्टादिति निश्चित्य दुर्मतिः ॥ १२
अतिहर्षान्वितो राजन्वरमेनमयाचत ।
शिष्यैः सह मम ब्रह्मन्यथा जातोऽतिथिर्भवान् ॥ १३
अस्मत्कुले महाराजो ज्येष्ठः श्रेष्ठो युधिष्ठिरः ।
वने वसति धर्मात्मा भ्रातृभिः परिवारितः ॥ १४
गुणवाञ्शीलसम्पन्नस्तस्य त्वमतिथिर्भव ।
यदा च राजपुत्री सा सुकुमारी यशस्विनी ।
भोजयित्वा द्विजान्सर्वान्पतींश्च वरवर्णिनी ॥ १५
विश्रान्ता च स्वयं भुक्त्वा सुखासीना भवेद्यदा ।
तदा त्वं तत्र गच्छेथा यद्यनुग्राह्यता मयि ॥ १६
तथा करिष्ये त्वत्प्रीत्येत्येवमुक्त्वा सुयोधनम् ।
दुर्वासा अपि विप्रेन्द्रो यथागतमगात्ततः ॥ १७
कृतार्थमपि चात्मानं तदा मेने सुयोधनः ।
करेण च करं गृह्य कर्णस्य मुदितो भृशम् ॥ १८

कर्णोऽपि भ्रातृसहितमित्युवाच नृपं मुदा ।
दिष्ट्या कामः सुसंवृत्तो दिष्ट्या कौरव वर्धसे ॥ १९
दिष्ट्या ते शत्रवो मग्ना दुस्तरे व्यसनार्णवे ।
दुर्वासःक्रोधजे वह्नौ पतिताः पाण्डुनन्दनाः ।
स्वैरेव ते महापापैर्गता वै दुस्तरं तमः ॥ २०

Mahābhārata–Vanaparva.

---

## II

## THE DUTIFUL RĀMA TRIES TO SOOTHE THE FEELINGS OF INDIGNANT LAKSHMAṆA AND SORROWING KAUSALYĀ

तथा तु विलपन्तीं तां कौसल्यां राममातरम् ।
उवाच लक्ष्मणो दीनस्तत्कालसदृशं वचः ॥ १
न रोचते ममाप्येतदार्ये यद्राघवो वनम् ।
त्यक्त्वा राज्यश्रियं गच्छेत् स्त्रिया वाक्यवशंगतः ॥ २
नास्यापराधं पश्यामि नापि दोषं तथाविधम् ।
येन निर्वास्यते राष्ट्राद्वनवासाय राघवः ॥ ३
न तं पश्याम्यहं लोके परोक्षमपि यो नरः ।
स्वमित्रोऽपि निरस्तोऽपि योऽस्य दोषमुदाहरेत् ॥ ४
देवकल्पमृजुं दान्तं रिपूणामपि वत्सलम् ।
अवेक्षमाणः को धर्मं त्यजेत्पुत्रमकारणात् ॥ ५
तदिदं वचनं राज्ञः पुनर्बाल्यमुपेयुषः ।
पुत्रः को हृदये कुर्याद्राजवृत्तमनुस्मरन् ॥ ६

यावदेव न जानाति कश्चिदर्थमिमं नरः ।
तावदेव मया सार्धमात्मस्थं कुरु शासनम् ॥ ७

मया पार्श्वे सधनुषा तव गुप्तस्य राघव ।
कः समर्थोऽधिकं कर्तुं कृतान्तस्येव तिष्ठतः ॥ ८

निर्मनुष्यामिमां सर्वामयोध्यां मनुजर्षभ ।
करिष्यामि शरैस्तीक्ष्णैर्यदि स्थास्यति विप्रिये ॥ ९

भरतस्याथ पक्ष्यो वा यो वाऽस्य हितमिच्छति ।
सर्वानेतान्वधिष्यामि मृदुर्हि परिभूयते ॥ १०

प्रोत्साहितोऽयं कैकेय्या स दुष्टो यदिः नः पिता ।
अमित्रभूतो निःसङ्गं वध्यतां वध्यतामपि ॥ ११

गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
उत्पथं प्रतिपन्नस्य कार्यं भवति शासनम् ॥ १२

त्वया चैव मया चैव कृत्वा वैरमनुत्तमम् ।
काऽस्य शक्तिः श्रियं दातुं भरतायारिशासन ॥ १३

अनुरक्तोऽस्मि भावेन भ्रातरं देवि तत्त्वतः ।
सत्येन धनुषा चैव दत्तेनेष्टेन ते शपे ॥ १४

दीप्तमग्निमरण्यं वा यदि रामो प्रवेक्ष्यति ।
प्रविष्टं तत्र मां देवि त्वं पूर्वमवधारय ॥ १५

हरामि वीर्याद्दुःखं ते तमः सूर्य इवोदितः ।
देवी पश्यतु मे वीर्यं राघवश्चैव पश्यतु ॥ १६

एतत्तु वचनं श्रुत्वा लक्ष्मणस्य महात्मनः ।
उवाच रामं कौसल्या रुदती शोकलालसा ॥ १७

भ्रातुस्ते वदतः पुत्र लक्ष्मणस्य श्रुतं त्वया ।
यदत्रानन्तरं कार्यं कुरुष्व यदि रोचते ॥ १८

न चाधर्म्यं वचः श्रुत्वा सपत्न्या मम भाषितम् ।
विहाय शोकसन्तप्तां गन्तुमर्हसि मामितः ॥ १९

धर्मज्ञ यदि धर्मिष्ठो धर्मं चरितुमिच्छसि ।
शुश्रूष मामिहस्थस्त्वं चर धर्ममनुत्तमम् ॥ २०

यथैव राजा पूज्यस्ते गौरवेण तथाह्यहम् ।
त्वां नाहमनुजानामि न गन्तव्यमितो वनम् ॥ २१

त्वद्वियोगान्न मे कार्यं जीवितेन सुखेन वा ।
त्वया सह मम श्रेयस्तृणानामपि भक्षणम् ॥ २२

यदि त्वं यास्यसि वनं त्यक्त्वा मां शोकलालसाम् ।
अहं प्रायमिहासिष्ये न हि शक्ष्यामि जीवितुम् ॥ २३

विलपन्तीं तथा दीनां कौसल्यां जननीं ततः ।
उवाच रामो धर्मात्मा वचनं धर्मसंहितम् ॥ २४

नास्ति शक्तिः पितुर्वाक्यं समतिक्रमितुं मम ।
प्रसादये त्वां शिरसा गन्तुमिच्छाम्यहं वनम् ॥ २५

ऋषिणा च पितुर्वाक्यं कुर्वता व्रतचारिणा ।
गौर्हता जानता धर्मं कण्डुनापि विपश्चिता ॥ २६

अस्माकं च कुले पूर्वं सगरस्याज्ञया पितुः ।
खनद्भिः सागरैर्भूमिमवाप्तः सुमहान्वधः ॥ २७

जामदग्न्येन रामेण रेणुका जननी स्वयम् ।
कृत्ता परशुनाऽरण्ये पितुर्वचनकारिणा ॥ २८

एतैरन्यैश्च बहुभिर्देवि देवसमैः कृतम् ।
पितुर्वचनमक्लीवं करिष्यामि पितुर्हितम् ॥ २९

नाहं धर्ममपूर्वं ते प्रतिकूलं प्रवर्तये ।
पूर्वैरयमभिप्रेतो गतो मार्गोऽनुगम्यते ॥ ३०

तदेतत्तु मया कार्यं क्रियते भुवि नान्यथा ॥
पितुर्हि वचनं कुर्वन्न कश्चिन्नाम हीयते ॥ ३१

तामेवमुक्त्वा जननीं लक्ष्मणं पुनरब्रवीत ।
वाक्यं वाक्यविदां श्रेष्ठः श्रेष्ठः सर्वधनुष्मताम् ॥ ३२

तव लक्ष्मण जानामि मयि स्नेहमनुत्तमम् ।
विक्रमं चैव सत्त्वं च तेजश्च सुदुरासदम् ॥ ३३

मम मातुर्महद्दुःखमतुलं शुभलक्षण ।
अभिप्रायमविज्ञाय सत्यस्य च शमस्य च ॥ ३४

धर्मो हि परमो लोके धर्मे सत्यं प्रतिष्ठितम् ।
धर्मसंश्रितमेतच्च पितुर्वचनमुत्तमम् ॥ ३५

संश्रुत्य च पितुर्वाक्यं मातुर्वा ब्राह्मणस्य वा ।
न कर्तव्यं वृथा वीर धर्ममाश्रित्य तिष्ठता ॥ ३६

सोऽहं न शक्ष्यामि पितुर्नियोगमतिवर्तितुम् ।
पितुर्हि वचनाद्वीर कैकेय्याहं प्रचोदितः ॥ ३७

तदेनां विसृजानार्यां क्षत्रधर्माश्रितां मतिम् ।
धर्ममाश्रय मा तैक्ष्ण्यं मद्बुद्धिरनुगम्यताम् ॥ ३८

तमेवमुक्त्वा सौहार्दाद्भ्रातरं लक्ष्मणाग्रजः ।
उवाच भूयः कौसल्यां प्राञ्जलिः शिरसा नतः ॥ ३९

अनुमन्यस्व मां देवि गमिष्यन्तमितो वनम् ।
शापितासि मम प्राणैः कुरु स्वस्त्ययनानि मे ॥ ४०

शोकः सन्धार्यतां मातर्हृदये साधु मा शुचः ।
वनवासादिहैष्यामि पुनः कृत्वा पितुर्वचः ॥ ४१

त्वया मया च वैदेह्या लक्ष्मणेन सुमित्रया ।
पितुर्नियोगे स्थातव्यमेष धर्मः सनातनः ॥ ४२

अम्ब संहृत्य सम्भारान्दुःखं हृदि निगृह्य च ।
वनवासकृता बुद्धिर्मम धर्म्यानुवर्त्यताम् ॥ ४३

Rāmāyaṇa-Ayodhyā.

---

## III

## SUGRĪVA TRIES TO INSPIRE HOPE IN RĀMA WHO DESPAIRS OF CROSSING THE SEA

सर्वथा सुकृतं तावत्सीतायाः परिमार्गणम् ।
सागरं तु समासाद्य पुनर्नष्टं मनो मम ॥ १

कथं नाम समुद्रस्य दुष्पारस्य महाम्भसः ।
हरयो दक्षिणं पारं गमिष्यन्ति समाहिताः ॥ २

यद्यप्येष तु वृत्तान्तो वैदेह्या गदितो मम ।
समुद्रपारगमने हरीणां किमिवोत्तरम् ॥ ३

इत्युक्त्वा शोकसंभ्रान्तो रामः शत्रुनिबर्हणः ।
हनुमन्तं महाबाहुस्ततो ध्यानमुपागमत् ॥ ४

तं तु शोकपरिद्यूनं रामं दशरथात्मजम् ।
उवाच वचनं श्रीमान्सुग्रीवः शोकनाशनम् ॥ ५

किं त्वं सन्तप्यसे वीर यथान्यः प्राकृतस्तथा ।
मैवं भूस्त्यज सन्तापं कृतघ्न इव सौहृदम् ॥ ६

सन्तापस्य च ते स्थानं न हि पश्यामि राघव ।
प्रवृत्तावुपलब्धायां ज्ञाते च निलये रिपोः ॥ ७

मतिमाञ्शास्त्रवित्प्राज्ञः पण्डितश्चासि राघव ।
त्यजेमां पापिकां बुद्धिं कृतात्मेवार्थदूषणीम् ॥ ८

समुद्रं लङ्घयित्वा तु महानक्रसमाकुलम् ।
लङ्कामारोहयिष्यामो हनिष्यामश्च ते रिपुम् ॥ ९

निरुत्साहस्य दीनस्य शोकपर्याकुलात्मनः ।
सर्वार्था व्यवसीदन्ति व्यसनं चाधिगच्छति ॥ १०

इमे शूराः समर्थाश्च सर्वे नो हरियूथपाः ।
त्वत्प्रियार्थं कृतोत्साहाः प्रवेष्टुमपि पावकम् ॥ ११

विक्रमेण समानेष्ये सीतां हत्वा यथा रिपुम् ।
रावणं पापकर्माणं तथा त्वं कर्तुमर्हसि ॥ १२

अबद्ध्वा सागरे सेतुं घोरे तु वरुणालये ।
लङ्का न मर्दितुं शक्या सेन्द्रैरपि सुरासुरैः ॥ १३

सेतुर्बद्धः समुद्रे च यावल्लङ्कासमीपतः ।
सर्वं तीर्णं च वै सैन्यं जितमित्युपधारय ॥ १४

इमे हि समरे शूरा हरयः कामरूपिणः ।
तानरीन्विधमिष्यन्ति शिलापादपवृष्टिभिः ॥ १५

तदलं विक्लवा बुद्धी राजन्सर्वार्थनाशिनी ।
पुरुषस्य हि लोकेऽस्मिञ्शोकः शौर्यापकर्षणः ॥ १६

यत्तु कार्यं मनुष्येण शौण्डीर्यमवलम्बता ।
अस्मिन्काले महाप्राज्ञ सत्त्वमातिष्ठ तेजसा ॥ १७

शूराणां हि मनुष्याणां त्वद्विधानां महात्मनाम् ।
विनष्टे वा प्रणष्टे वा शोकः सर्वार्थनाशनः ॥ १८

त्वं तु बुद्धिमतां श्रेष्ठः सर्वशास्त्रार्थकोविदः ।
मद्विधैः सचिवैः सार्धमरिं जेतुमिहार्हसि ॥ १९

न हि पश्याम्यहं कंचित्त्रिषु लोकेषु राघव ।
गृहीतधनुषो यस्ते तिष्ठेदभिमुखो रणे ॥ २०

वानरेषु समासक्तं न ते कार्यं विपत्स्यते ।
अचिराद्द्रक्ष्यसे सीतां तीर्त्वा सागरमक्षयम् ॥ २१

तदलं शोकमालम्ब्य क्रोधमालम्ब भूपते ।
निश्चेष्टाः क्षत्रिया मन्दाः सर्वे चण्डस्य बिभ्यति ॥ २२

लङ्घनार्थं च घोरस्य समुद्रस्य नदीपतेः ।
सहास्माभिरिहोपेतः सूक्ष्मबुद्धिर्विचारय ॥ २३

कथंचित्सन्तरिष्यामस्ते वयं वरुणालयम् ।
हतमित्येव तं मन्ये युद्धे समितिनन्दन ॥ २४

किमुक्त्वा बहुधा चापि सर्वथा विजयी भवान् ।
निमित्तानि च पश्यामि मनो मे संप्रहृष्यति ॥ २५

Rāmāyaṇa–Yuddhakāṇḍa.

---

## IV

## HANUMAN, AT THE REQUEST OF BHARATA, SUMMARIZES THE STORY OF RĀMA'S LIFE UP TO THE LATTER'S RETURN TO AYODHYĀ.

बहूनि नाम वर्षाणि गतस्य सुमहद्वनम् ।
शृणोम्यहं प्रीतिकरं मम नाथस्य कीर्तनम् ॥ १

कल्याणी बत गाथेयं लौकिकी प्रतिभाति मे ।
एति जीवन्तमानन्दो नरं वर्षशतादपि ॥ २

राघवस्य हरीणां च कथमासीत्समागमः ।
कस्मिन्देशे किमाश्रित्य तत्त्वमाख्याहि पृच्छतः ॥ ३

स पृष्टो राजपुत्रेण बृस्यां समुपवेशितः ।
आचचक्षे ततः सर्वं रामस्य चरितं वने ॥ ४

यथा प्रव्राजितो रामो मातुर्दत्तो वरस्तव ।
यथा च पुत्रशोकेन राजा दशरथो मृतः ॥ ५

यथा दूतैस्त्वमानीतस्तूर्णं राजगृहात्प्रभो ।
त्वयायोध्यां प्रविष्टेन यथा राज्यं न चेप्सितम् ॥ ६

चित्रकूटं गिरिं गत्वा राज्येनामित्रकर्शन ।
निमन्त्रितस्त्वया भ्राता धर्ममाचरता सताम् ॥ ७

स्थितेन राज्ञो वचने यथा राज्यं विसर्जितम् ।
आर्यस्य पादुके गृह्य यथासि पुनरागतः ॥ ८

सर्वमेतन्महाबाहो यथावद्विदितं तव ।
त्वयि प्रतिप्रयाते तु यद्वृत्तं तन्निबोध मे ॥ ९

अपयाते त्वयि तदा समुद्भ्रान्तमृगद्विजम् ।
परिद्यूनमिवात्यर्थं तद्वनं समपद्यत ॥ १०

तद्धस्तिमृदितं घोरं सिंहव्याघ्रमृगायुतम् ।
प्रविवेशाथ विजनं सुमहद्दण्डकावनम् ॥ ११

तेषां पुरस्ताद्बलवान्गच्छतां गहने वने ।
निनदन्सुमहानादं विराधः प्रत्यदृश्यत ॥ १२

तमुत्क्षिप्य महानादमूर्ध्वबाहुमधोमुखम् ।
निखाते प्रक्षिपन्ति स्म नदन्तमिव कुञ्जरम् ॥ १३

तत्कृत्वा दुष्करं कर्म भ्रातरौ रामलक्ष्मणौ ।
सायाह्ने शरभङ्गस्य रम्यमाश्रममीयतुः ॥ १४

शरभङ्गे दिवं प्राप्ते रामः सत्यपराक्रमः ।
अभिवाद्य मुनीन्सर्वाञ्जनस्थानमुपागमत् ॥ १५

ततः पश्चाच्छूर्पणखा रामपार्श्वमुपागता ॥ १६

ततो रामेण सन्दिष्टो लक्ष्मणः सहसोत्थितः ।
प्रगृह्य खड्गं चिच्छेद कर्णनासं महाबलः ॥ १७

चतुर्दश सहस्राणि रक्षसां भीमकर्मणाम् ।
हतानि वसता तत्र राघवेण महात्मना ॥ १८

एकेन सह सङ्गम्य रणे रामेण सङ्गताः ।
अह्नश्चतुर्थभागेन निःशेषा राक्षसाः कृताः ॥ १९

महाबला महावीर्यास्तपसो विघ्नकारिणः ।
निहता राघवेणाजौ दण्डकारण्यवासिनः ॥ २०

राक्षसाश्च विनिष्पिष्टाः खरश्च निहतो रणे ।
ततस्तेनार्दिता बाला रावणं समुपागता ॥ २१

रावणानुचरो घोरो मारीचो नाम राक्षसः ।
लोभयामास वैदेहीं भूत्वा रत्नमयो मृगः ॥ २२
अथैनमब्रवीद्रामं वैदेही गृह्यतामिति ।
अहो मनोहरः कान्त आश्रमो नो भविष्यति ॥ २३
ततो रामो धनुष्पाणिर्धावन्तमनुधावति ।
स तं जघान धावन्तं शरेणानतपर्वणा ॥ २४
अथ सौम्य दशग्रीवो मृगं याते तु राघवे ।
लक्ष्मणे चापि निष्क्रान्ते प्रविवेशाश्रमं तदा ॥ २५
जग्राह तरसा सीतां ग्रहः खे रोहिणीमिव ।
त्रातुकामं ततो युद्धे हत्वा गृध्रं जटायुषम् ॥ २६
प्रगृह्य सीतां सहसा जगामाशु स रावणः ।
ततस्त्वद्भुतसङ्काशाः स्थिताः पर्वतमूर्धनि ॥ २७
सीतां गृहीत्वा गच्छन्तं वानराः पर्वतोपमाः ।
ददृशुर्विस्मितास्तत्र रावणं राक्षसाधिपम् ॥ २८
प्रविवेश ततो लङ्कां रावणो लोकरावणः ॥ २९
तां सुवर्णपरिक्रान्ते शुभे महति वेश्मनि ।
प्रविश्य मैथिलीं वाक्यैः सान्त्वयामास रावणः ॥ ३०
तृणवद्भाषितं तस्य तं च नैर्ऋतपुङ्गवम् ।
अचिन्तयन्ती वैदेही अशोकवनिकां गता ॥ ३१
न्यवर्तत ततो रामो मृगं हत्वा महावने ।
निवर्तमानः काकुत्स्थो दृष्ट्वा गृध्रं प्रविव्यथे ॥ ३२
गृध्रं हतं ततो दग्ध्वा रामः प्रियसखं पितुः ।
मार्गमाणस्तु वैदेहीं राघवः सहलक्ष्मणः ॥ ३३

गोदावरीमन्वचरद्वनोद्देशांश्च पुष्पितान् ।
आसेदतुर्महारण्ये कबन्धं नाम राक्षसम् ॥ ३४
ततः कबन्धवचनाद्रामः सत्यपराक्रमः ।
ऋष्यमूकं गिरिं गत्वा सुग्रीवेण समागतः ॥ ३५
तयोः समागमः पूर्वं प्रीत्या हार्दो व्यजायत ।
भ्रात्रा निरस्तः क्रुद्धेन सुग्रीवो वालिना पुरा ॥ ३६
इतरेतरसंवादात्प्रगाढः प्रणयस्तयोः ।
रामस्य बाहुवीर्येण स्वराज्यं प्रत्यपादयत् ॥ ३७
वालिनं समरे हत्वा महाकायं महाबलम् ।
सुग्रीवः स्थापितो राज्ये सहितः सर्ववानरैः ॥ ३८
रामाय प्रतिजानीते राजपुत्र्याश्च मार्गणम् ॥ ३९
आदिष्टा वानरेन्द्रेण सुग्रीवेण महात्मना ।
दश कोट्यः प्लवङ्गानां सर्वाः प्रस्थापिता दिशः ॥ ४०
तेषां नो विप्रकृष्टानां विन्ध्ये पर्वतसत्तमे ।
भृशं शोकाभितप्तानां महान्कालोऽत्यवर्तत ॥ ४१
भ्राता तु गृध्रराजस्य सम्पातिर्नाम वीर्यवान् ।
समाख्याति स्म वसतिं सीताया रावणालये ॥ ४२
सोहं शोकपरीतानां दुःखं तज्ज्ञातिनां नुदन् ।
आत्मवीर्यं समास्थाय योजनानां शतं प्लुतः ॥ ४३
तत्राहमेकामद्राक्षमशोकवनिकां गताम् ।
कौशेयवस्त्रां मलिनां निरानन्दां दृढव्रताम् ॥ ४४
तया समेत्य विधिवत्पृष्ट्वा सर्वमनिन्दिताम् ।
अभिज्ञानं च मे दत्तमर्चिष्मान्स महामणिः ॥ ४५

अभिज्ञानं मणिं लब्ध्वा चरितार्थोऽहमागतः ॥ ४६

मया च पुनरागम्य रामस्याक्लिष्टकर्मणः ।
अभिज्ञानं मया दत्तमर्चिष्मान्स महामणिः ॥ ४७

श्रुत्वा तु मैथिलीं हृष्टस्त्वाशशंसे च जीवितम् ।
जीवितान्तमनुप्राप्तः पीत्वाऽमृतमिवातुरः ॥ ४८

उद्योजयिष्यन्नुद्योगं दध्रे कामं वधे मनः ।
जिघांसुरिव लोकान्ते सर्वाँल्लोकान् विभावसुः ॥ ४९

ततः समुद्रमासाद्य नलं सेतुमकारयत् ।
अतरत्कपिवीराणां वाहिनी तेन सेतुना ॥ ५०

प्रहस्तमवधीन्नीलः कुम्भकर्णं तु राघवः ।
लक्ष्मणो रावणसुतं स्वयं रामस्तु रावणम् ॥ ५१

स शक्रेन समागम्य यमेन वरुणेन च ।
महेश्वरस्वयम्भूभ्यां तथा दशरथेन च ॥ ५२

तैश्च दत्तवरः श्रीमानृषिभिश्च समागतः ।
सुरर्षिभिश्च काकुत्स्थो वराँल्लेभे परंतपः ॥ ५३

स तु दत्तवरः प्रीत्या वानरैश्च समागतः ।
पुष्पकेण विमानेन किष्किन्धामभ्युपागमत् ॥ ५४

तं गङ्गां पुनरासाद्य वसन्तं मुनिसन्निधौ ।
अविघ्नं पुष्ययोगेन श्वो रामं द्रष्टुमर्हसि ॥ ५५

ततस्तु सत्यं हनुमद्वचो महन्निशम्य हृष्टो भरतः कृताञ्जलिः ।
उवाच वाणीं मनसः प्रहर्षिणीं चिरस्य पूर्णः खलु मे मनोरथः ॥ ५६

Rāmāyaṇa–Yuddhakāṇḍa.

---

# V

## A DESCRIPTION OF HEMANTA

वसतस्तस्य तु सुखं राघवस्य महात्मनः ।
शरद्व्यपाये हेमन्त ऋतुरिष्टः प्रवर्तते ॥ १

स कदाचित्प्रभातायां शर्वर्यां रघुनन्दनः ।
प्रययावभिषेकार्थं रम्यां गोदावरीं नदीम् ॥ २

प्रह्वः कलशहस्तस्तं सीतया सह वीर्यवान् ।
पृष्ठतोऽनुव्रजन्भ्राता सौमित्रिरिदमब्रवीत् ॥ ३

अयं स कालः संप्राप्तो प्रियो यस्ते प्रियंवद
अलङ्कृत इवाभाति येन संवत्सरः शुभः ॥ ४

नीहारपरुषो लोकः पृथिवी सस्यशालिनी ।
जलान्यनुपभोग्यानि सुभगो हव्यवाहनः ॥ ५

नवाग्रयणपूजाभिरभ्यर्च्य पितृदेवताः ।
कृताग्रयणकाः काले सन्तो विगतकल्मषाः ॥ ६

प्राज्यकामा जनपदाः सम्पन्नतरगोरसाः ।
विचरन्ति महीपाला यात्रास्था विजिगीषवः ॥ ७

सेवमाने दृढं सूर्ये दिशमन्तकसेविताम् ।
विहीनतिलकेव स्त्री नोत्तरा दिक्प्रकाशते ॥ ८

प्रकृत्या हिमकोशाढ्यो दूरसूर्यश्च सांप्रतम् ।
यथार्थनामा सुव्यक्तं हिमवान्हिमवान्गिरिः ॥ ९

अत्यन्तसुखसञ्चारा मध्याह्ने स्पर्शतः सुखाः ।
दिवसाः सुभगादित्याश्छायासलिलदुर्भगाः ॥ १०

मृदुसूर्याः सनीहाराः पटुशीताः समारुताः ।
शून्यारण्या हिमध्वस्ता दिवसा भान्ति सांप्रतम् ॥ ११

निवृत्ताकाशशयनाः पुष्यनीता हिमारुणाः ।
शीता वृद्धतरायामास्त्रियामा यान्ति सांप्रतम् ॥ १२

रविसंक्रान्तसौभाग्यस्तुषारारुणमण्डलः ।
निःश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते ॥ १३

ज्योत्स्ना तुषारमलिना पौर्णमास्यां न राजते ।
सीतेव चातपश्यामा लक्ष्यते न तु शोभते ॥ १४

प्रकृत्या शीतलस्पर्शो हिमविद्धश्च सांप्रतम् ।
प्रवाति पश्चिमो वायुः काले द्विगुणशीतलः ॥ १५

बाष्पच्छन्नान्यरण्यानि यवगोधूमवन्ति च ।
शोभन्तेऽभ्युदिते सूर्ये नदद्भिः क्रौञ्चसारसैः ॥ १६

खर्जूरपुष्पाकृतिभिः शिरोभिः पूर्णतण्डुलैः ।
शोभन्ते किञ्चिदानम्राः शालयः कनकप्रभाः ॥ १७

मयूखैरुपसर्पद्भिर्हिमनीहारसंवृतैः ।
दूरमभ्युदितः सूर्यः शशाङ्क इव लक्ष्यते ॥ १८

अग्राह्यवीर्यः पूर्वाह्णे मध्याह्ने स्पर्शतः सुखः ।
संरक्तः किञ्चिदापाण्डुरातपः शोभते क्षितौ ॥ १९

अवश्यायनिपातेन किञ्चित्प्रक्लिन्नशाद्वला ।
वनानां शोभते भूमिर्निविष्टतरुणातपा ॥ २०

स्पृशंस्तु विपुलं शीतमुदकं द्विरदः सुखम् ।
अत्यन्ततृषितो वन्यः प्रतिसंहरते करम् ॥ २१

एते हि समुपासीना विहगा जलचारिणः ।
न विगाहन्ति सलिलमप्रगल्भा इवाहवम् ॥ २२

अवश्यायतमोनद्धा नीहारतमसा वृताः ।
प्रसुप्ता इव लक्ष्यन्ते विपुष्पा वनराजयः ॥ २३

बाष्पसञ्छन्नसलिला रुतविज्ञेयसारसाः ।
हिमार्द्रवालुकैस्तीरैः सरितो भान्ति सांप्रतम् ॥ २४

तुषारपतनाच्चैव मृदुत्वाद्भास्करस्य च ।
शैत्यादगाग्रस्थमपि प्रायेण रसवज्जलम् ॥ २५

Rāmāyaṇa-Araṇyakāṇḍa.

---

## VI

## A POETIC DESRCRIPTION OF THE MIGHTY WARRIOR ARJUNA

अग्निर्ब्राह्मणरूपेण प्रच्छन्नोऽन्नमयाचत ।
महाशनं ब्राह्मणं मां प्रमुञ्चार्जुन खाण्डवे ॥ १

संशुश्रुवे च धर्मात्मा यस्तमर्थं चकार ह ।
तस्मै ब्राह्मणरूपाय हुताशाय महायशाः ।
विजित्यैकरथेनेन्द्रं हत्वा पन्नगराक्षसान् ॥ २

यस्तु देवान्मनुष्यांश्च सर्वानेकरथोऽयजत् ।
स भीमधन्वा श्वेताश्वः पाण्डवः किं करिष्यति ॥ ३

समुद्र इव सिंधूनां शैलानां हिमवानिव ।
महेन्द्र इव देवानां दानवानां बलिर्यथा ॥ ४

सुप्रतीको गजेन्द्राणां युग्यानां तुरगो यथा ।
कुबेर इव यक्षाणां मृगाणां केसरी यथा ॥ ५

रोषामर्षसमायुक्तो भुजङ्गानां च तक्षकः ।
वायुवेगबलोद्भूतो गरुडः पततामिव ॥ ६

आयुधानां वरो वज्रः ककुद्मांश्च गवां वरः ।
धृतराष्ट्रश्च नागानां हस्तिष्वैरावतो यथा ॥ ७

पुत्रः प्रियाणामधिको भार्या च सुहृदां वरा ।
गिरीणां प्रवरो मेरुर्देवानां मधुसूदनः ।
ग्रहाणां प्रवरश्चन्द्रः सरसां मानसो यथा ॥ ८

यथैतानि विशिष्टानि स्वस्यां जात्यां वृकोदर ।
एवं युवा गुडाकेशः श्रेष्ठः सर्वधनुष्मताम् ॥ ९

सोऽयमिन्द्रादनवमो वासुदेवाच्च भारत ।
उषित्वा पञ्च वर्षाणि सहस्राक्षस्य वेश्मनि ॥ १०

ब्रह्मचारी व्रते युक्तः सर्वशस्त्रभृतां वरः ।
अवाप चास्त्रमस्त्रज्ञः सर्वज्ञः सर्वसंमतः ।
क्षिप्रं चाणु विचित्रं च ध्रुवं च वदतां वरः ॥ ११

अनुज्ञातः सुरेन्द्रेण पुनः प्रत्यागतो महीम् ।
धार्तराष्ट्रविनाशाय पाण्डवानां जयाय च ॥ १२

यं मन्ये द्वादशं रुद्रमादित्यानां त्रयोदशम् ।
वसूनां नवमं मन्ये गिरीणामष्टमः स्मृतः ॥ १३

यस्य दीर्घौ समौ बाहू ज्याघातेन किणीकृतौ ।
दक्षिणश्चैव सव्यश्च बाहू अनडुहो यथा ॥ १४

तलाङ्गुलित्राभ्युचितौ नागराजकरोपमौ ।
पीनौ परिघसङ्काशौ मृदुताम्रतलौ शुभौ ॥ १५
श्यामो युवा गुडाकेशो दर्शनीयश्च पाण्डवः ।
गाण्डीवधन्वा श्वेताश्वः किरीटी वानरध्वजः ॥ १६
किंरूपधारी किंकर्मा किंचेष्टः किंपरायणः ।
बीभत्सुर्भीमधन्वा च किं करिष्यति चार्जुनः ॥
कुन्तीपुत्रो विराटस्य रमते केन कर्मणा ॥ १७

Mahābhārata–Virāṭaparva.

---

## VII

### RESTRAINT OF SENSES IS THE ROOT OF SUCCESS

शब्दः स्पर्शश्च रूपं च रसो गन्धश्च पञ्चमः ।
एकैकमलमेतेषां विनाशप्रतिपत्तये ॥ १
शुचिशष्पाङ्कुराहारो विदूरक्रमणक्षमः ।
लुब्धकाद्गीतलोभेन मृगो मृगयते वधम् ॥ २
गिरीन्द्रशिखराकारो लीलयोन्मूलितद्रुमः ।
करिणीस्पर्शसंमोहादालानं याति वारणः ॥ ३
स्निग्धदीपशिखालोकविलोभितविलोचनः ।
मृत्युमृच्छत्यसन्देहात् पतङ्गः सहसा पतन् ॥ ४
दूरेऽपि च भवन् दृष्टेरगाधसलिले चरन् ।
मीनस्तु सामिषं लोहमास्वादयति मृत्यवे ॥ ५
गन्धलुब्धो मधुकरो दानासवपिपासया ।
अभ्येत्यसुखसञ्चारां गजकर्णझणज्झणाम् ॥ ६

एकैकशो विनिघ्नन्ति विषया विषसंनिभाः ।
क्षेमी नु स कथं वा स्याद्यः समं पञ्च सेवते ॥ ७

सेवेत विषयान्काले मुक्त्वा तत्परतां वशी ।
सुखं हि फलमर्थस्य तन्निरोधे वृथा श्रियः ॥ ८

निकामं सक्तमनसां कान्तामुखविलोकने ।
गलन्ति गलिताश्रूणां यौवनेन सह श्रियः ॥ ९

धर्मादर्थोऽर्थतः कामः कामात्सुखफलोदयः ।
आत्मानं हन्ति तान्हत्वा युक्त्या यो न निषेवते ॥ १०

मृगयाऽक्षास्तथा पानं गर्हितानि महीभुजाम् ।
दृष्टास्तेभ्यस्तु विपदः पाण्डुनैषधवृष्णिषु ॥ ११

कामः क्रोधस्तथा लोभो हर्षो मानो मदस्तथा ।
षड्वर्गमुत्सृजेदेनमस्मिंस्त्यक्ते सुखी नृपः ॥ १२

शत्रुषड्वर्गमुत्सृज्य जामदग्न्यो जितेन्द्रियः ।
अम्बरीषो महाभागो बुभुजाते चिरं महीम् ॥ १३

शास्त्राय गुरुसंयोगः शास्त्रं विनयवृद्धये ।
विद्याविनीतो नृपतिर्न कृच्छ्रेष्ववसीदति ॥ १४

इति स्म राजा विजयी नयान्वितो
निषेवमाणो नरदेवसेवितम् ।
पदं समाक्रामति भास्वरं श्रिया
शिरो महारत्नगिरेरिवोन्नतम् ॥ १५

परां विनीतः समुपैति सेव्यतां
महीपतीनां विनयो विभूषणम् ।

प्रवृत्तदानो मृदुसञ्चरत्करः
करीव भद्रो विनयेन शोभते ॥ १६

सुनिपुणमुपसेव्य सद्गुरुं
शुचिरनुवृत्तिपरो विभूतये ।
भवति हि विनयोपबृंहितो
नृपतिपदाय शमाय च क्षमः ॥ १७

Kāmandakīyanītisāra I.

---

# VIII

## SOME QUESTIONS AND ANSWERS OF PERENNIAL INTEREST

केनस्विच्छ्रोत्रियो भवति केनस्विद्विन्दते महत् ।
केनस्विद् द्वितीयवान्भवति राजन्केन च बुद्धिमान् ॥ १

श्रुतेन श्रोत्रियो भवति तपसा विन्दते महत् ।
धृत्या द्वितीयवान्भवति बुद्धिमान्वृद्धसेवया ॥ २

इन्द्रियार्थाननुभवन्बुद्धिमाँल्लोकपूजितः ।
संमतः सर्वभूतानामुच्छ्वसन्को न जीवति ॥ ३

देवतातिथिभृत्यानां पितॄणामात्मनश्च यः ।
न निर्वपति पञ्चानामुच्छ्वसन्न स जीवति ॥ ४

किंस्विद्गुरुतरं भूमेः किंस्विदुच्चतरं च खात् ।
किंस्विच्छीघ्रतरं वायोः किंस्विद्बहुतरं तृणात् ॥ ५

**माता गुरुतरा भूमेः** खात्पितोच्चतरस्तथा ।
मनः शीघ्रतरं वाताच्चिन्ता बहुतरी तृणात् ॥ ६

किंस्वित्प्रवसतो मित्रं किंस्विन्मित्रं गृहे सतः ।
आतुरस्य च किं मित्रं किंस्विन्मित्रं मरिष्यतः ॥ ७

**विद्या प्रवसतो मित्रं भार्या मित्रं गृहे सतः ।**
आतुरस्य भिषङ् मित्रं दानं मित्रं मरिष्यतः ॥ ८

धन्यानामुत्तमं किंस्विद्धनानां स्यात्किमुत्तमम् ।
लाभानामुत्तमं किं स्यात्सुखानां स्यात्किमुत्तमम् ॥ ९

धन्यानामुत्तमं दाक्ष्यं धनानामुत्तमं श्रुतम् ।
**लाभानां श्रेय आरोग्यं** सुखानां तुष्टिरुत्तमा ॥ १०

केनस्विदावृतो लोकः केनस्विन्न प्रकाशते ।
केन त्यजति मित्राणि केन स्वर्गं न गच्छति ॥ ११

अज्ञानेनावृतो लोकस्तमसा न प्रकाशते ।
लोभात्त्यजति मित्राणि सङ्गात्स्वर्गं न गच्छति ॥ १२

मृतः कथं स्यात्पुरुषः कथं राष्ट्रं मृतं भवेत् ।
श्राद्धं मृतं कथं वा स्यात्कथं यज्ञो मृतो भवेत् ॥ १३

मृतो दरिद्रः पुरुषो मृतं राष्ट्रमराजकम् ।
मृतमश्रोत्रियं श्राद्धं मृतो यज्ञस्त्वदक्षिणः ॥ १४

तपः किंलक्षणं प्रोक्तं को दमश्च प्रकीर्तितः ।
क्षमा च का परा प्रोक्ता का च ह्रीः परिकीर्तिता ॥ १५

तपः स्वधर्मवर्तित्वं मनसो दमनं दमः ।
क्षमा द्वन्द्वसहिष्णुत्वं ह्रीरकार्यनिवर्तनम् ॥ १६

कः शत्रुर्दुर्जयः पुंसां कश्च व्याधिरनन्तकः ।
कीदृशश्च स्मृतः साधुरसाधुः कीदृशः स्मृतः ॥ १७

क्रोधः सुदुर्जयः शत्रुर्लोभो व्याधिरनन्तकः ।
सर्वभूतहितः साधुरसाधुर्निर्दयः स्मृतः ॥ १८

किं स्थैर्यमृषिभिः प्रोक्तं किं च धैर्यमुदाहृतम् ।
स्नानं च किं परं प्रोक्तं दानं च किमिहोच्यते ॥ १९

स्वधर्मे स्थिरता स्थैर्यं धैर्यमिन्द्रियनिग्रहः ।
स्नानं मनोमलत्यागो दानं वै भूतरक्षणम् ॥ २०

कः पण्डितः पुमाञ् ज्ञेयो नास्तिकः कश्च उच्यते ।
को मूर्खः कश्च कामः स्यात्को मत्सर इति स्मृतः ॥ २१

धर्मज्ञः पण्डितो ज्ञेयो नास्तिको मूर्ख उच्यते ।
कामः संसारहेतुश्च हृत्तापो मत्सरः स्मृतः ॥ २२

धर्मश्चार्थश्च कामश्च परस्परविरोधिनः ।
एषां नित्यविरुद्धानां कथमेकत्र सङ्गमः ॥ २३

यदा धर्मश्च भार्या च परस्परवशानुगौ ।
तदा धर्मार्थकामानां त्रयाणामपि सङ्गमः ॥ २४

राजन्कुलेन वृत्तेन स्वाध्यायेन श्रुतेन वा ।
ब्राह्मण्यं केन भवति प्रब्रूह्येतत्सुनिश्चितम् ॥ २५

शृणु यक्ष कुलं तात न स्वाध्यायो न च श्रुतम् ।
कारणं हि द्विजत्वे च वृत्तमेव न संशयः ॥ २६

वृत्तं यत्नेन संरक्ष्यं ब्राह्मणेन विशेषतः ।
अक्षीणवृत्तो न क्षीणो वृत्ततस्तु हतो हतः ॥ २७

पठकाः पाठकाश्चैव ये चान्ये शास्त्रचिन्तकाः ।
सर्वे व्यसनिनो मूर्खा यः क्रियावान्सपण्डितः ॥ २८

चतुर्वेदोऽपि दुर्वृत्तः स शूद्रादतिरिच्यते ।
योऽग्निहोत्रपरो दान्तः स ब्राह्मण इति स्मृतः ॥ २९

को मोदते किमाश्चर्यं कः पन्थाः का च वार्तिका ।
वद मे चतुरः प्रश्नान्मृता जीवन्तु बान्धवाः ॥ ३०

पञ्चमेऽहनि षष्ठे वा शाकं पचति स्वे गृहे ।
अनृणी चाप्रवासी च स वारिचर मोदते ॥ ३१

अहन्यहनि भूतानि गच्छन्तीह यमालयम् ।
शेषाः स्थावरमिच्छन्ति किमाश्चर्यमतः परम् ॥ ३२

तर्कोऽप्रतिष्ठः श्रुतयो विभिन्ना
नैको मुनिर्यस्य मतं प्रमाणम् ।
धर्मस्य तत्त्वं निहितं गुहायां
**महाजनो येन गतः स पन्थाः ॥** ३३

Māhābhārata–Vanaparva.

---

## IX

### THE PROLOGUE TO THE MĀLAVIKĀGNIMITRA

**सूत्रधारः**—( नेपथ्याभिमुखमवलोक्य ) मारिष, इतस्तावत् ।

**पारिपार्श्वकः**—( प्रविश्य ) भाव, अयमस्मि ।

**सूत्र०**—अभिहितोऽस्मि परिषदा कालिदासग्रथितवस्तु मालविकाग्निमित्रं नाम नाटकमस्मिन्वसन्तोत्सवे प्रयोक्तव्यमिति । तदारभ्यतां सङ्गीतकम् ।

**पारि०**—मा तावत्। प्रथितयशसां भासकविसौमिल्लकविमिश्रादीनां प्रबन्धानतिक्रम्य वर्तमानकवेः कालिदासस्य क्रियायां कथं परिषदो बहुमानः।

**सूत्र०**—अयि विवेकविश्रान्तमभिहितम्। पश्य।

पुराणमित्येव न साधु सर्वं
न चापि काव्यं नवमित्यवद्यम्।
सन्तः परीक्ष्यान्यतरद्भजन्ते
**मूढः परप्रत्ययनेयबुद्धिः॥** १

**पारि०**—आर्यमिश्राः प्रमाणम्।

**सूत्र०**—तेन हि त्वरतां भवान्।

शिरसा प्रथमगृहीतामाज्ञामिच्छामि परिषदः कर्तुम्।
देव्या इव धारिण्याः सेवादक्षः परिजनोऽयम्॥ २

Mālavikāgnimitra I.

---

# X

## AN OLD MAN CURSES DAS'ARATHA WHICH PROVES A BLESSING IN DISGUISE

अथ यथासुखमार्तवमुत्सवं
समनुभूय विलासवतीसखः।
नरपतिश्चकमे मृगयारतिं
स मधुमन्मधुमन्मथसन्निभः॥ १

परिचयं चललक्ष्यनिपातने
भयरुषोश्च तदिङ्गितबोधनम् ।
श्रमजयात्प्रगुणां च करोत्यसौ
तनुमतोऽनुमतः सचिवैर्ययौ ॥ २

श्वगणिवागुरिकैः प्रथमास्थितं
व्यपगतानलदस्यु विवेश सः ।
स्थिरतुरङ्गमभूमि निपानव-
न्मृगवयोगवयोपचितं वनम् ॥ ३

अथ नभस्य इव त्रिदशायुधं
कनकपिङ्गतडिद्गुणसङ्गतम् ।
धनुरधिज्यमनाधिरुपाददे
नरवरो रवरोषितकेसरी ॥ ४

लक्ष्यीकृतस्य हरिणस्य हरिप्रभावः
प्रेक्ष्य स्थितां सहचरीं व्यवधाय देहम् ।
आकर्णकृष्टमपि कामितया स धन्वी
बाणं कृपामृदुमनाः प्रतिसञ्जहार ॥ ५

प्रायो विषाणपरिमोषलघूत्तमाङ्गान्
खड्गांश्चकार नृपतिर्निशितैः क्षुरप्रैः ।
शृङ्गं स दृप्तविनयाधिकृतः परेषा-
मत्युच्छ्रितं न ममृषे न तु दीर्घमायुः ॥ ६

निर्घातोग्रैः कुञ्जलीनाञ्जिघांसुर्-
ज्यानिर्घोषैः क्षोभयामास सिंहान् ।

नूनं तेषामभ्यसूयापरोऽभूद्
वीर्योदग्रे राजशब्दे मृगेषु ॥ ७

तान्हत्वा गजकुलबद्धतीव्रवैरान्
काकुत्स्थः कुटिलनखाग्रलग्नमुक्तान् ।
आत्मानं रणकृतकर्मणां गजाना-
मानृण्यं गतमिव मार्गणैरमंस्त ॥ ८

चमरान्परितः प्रवर्तिताश्वः क्वचिदाकर्णविकृष्टभल्लवर्षी ।
नृपतीनिव तान्वियोज्य सद्यः सितवालव्यजनैर्जगाम शान्तिम् ॥ ९

इति विस्मृतान्यकरणीयमात्मनः
सचिवावलम्बितधुरं नराधिपम् ।
परिवृद्धरागमनुबन्धसेवया
मृगया जहार चतुरेव कामिनी ॥ १०

स ललितकुसुमप्रवालशय्यां
ज्वलितमहौषधिदीपिकासनाथाम् ।
नरपतिरतिवाहयांबभूव
क्वचिदसमेतपरिच्छदस्त्रियामाम् ॥ ११

उषसि स गजयूथकर्णतालैः
पटुपटहध्वनिभिर्विनीतनिद्रः ।
अरमत मधुराणि तत्र शृण्वन्
विहगविकूजितबन्दिमङ्गलानि ॥ १२

अथ जातु रुरोर्गृहीतवर्त्मा विपिने पार्श्वचरैरलक्ष्यमाणः ।
श्रमफेनमुचा तपस्विगाढां तमसां प्राप नदीं तुरङ्गमेण ॥ १३

कुम्भपूरणभवः पटुरुच्चैरुच्चचार निनदोऽम्भसि तस्याः ।
तत्र स द्विरदबृंहितशङ्की शब्दपातिनमिषुं विससर्ज ॥ १४

नृपतेः प्रतिषिद्धमेव तत् कृतवान्पङ्क्तिरथो विलङ्घ्य यत् ।
अपदे पदमर्पयन्ति हि श्रुतवन्तोऽपि रजोनिमीलिताक्षाः ॥ १५

हा तातेति क्रन्दितमाकर्ण्य विषण्ण-
स्तस्यान्विष्यन्वेतसगूढप्रभवं सः ।
शल्यप्रोतं प्रेक्ष्य सकुम्भं मुनिपुत्रं
तापादन्तःशल्य इवासीत्क्षितिपोऽपि ॥ १६

तेनावतीर्य तुरगात्प्रथितान्वयेन
पृष्टान्वयः स जलकुम्भनिषण्णदेहः ।
तस्मै द्विजेतरतपस्विसुतं स्खलद्भि-
रात्मानमक्षरपदैः कथयांबभूव ॥ १७

तच्चोदितश्च तमनुद्धृतशल्यमेव
पित्रोः सकाशमवसन्नदृशोर्निनाय ।
ताभ्यां तथागतमुपेत्य तमेकपुत्र-
मज्ञानतः स्वचरितं नृपतिः शशंस ॥ १८

तौ दम्पती बहु विलप्य शिशोः प्रहर्त्रा
शल्यं निखातमुदहारयतामुरस्तः ।
सोऽभूत्परासुरथ भूमिपतिं शशाप
हस्तार्पितैर्नयनवारिभिरेव वृद्धः ॥ १९

दिष्टान्तमाप्स्यति भवानपि पुत्रशोका-
दन्त्ये वयस्यहमिवेति तमुक्तवन्तम् ।

आक्रान्तपूर्वमिव मुक्तविषं भुजङ्गं
प्रोवाच कोशलपतिः प्रथमापराद्धः ॥ २०

शापोऽप्यदृष्टतनयाननपद्मशोभे
सानुग्रहो भगवता मयि पातितोऽयम् ।
कृष्यां दहन्नपि खलु क्षितिमिन्धनेद्धो
बीजप्ररोहजननीं ज्वलनः करोति ॥ २१

इत्थंगते गतघृणः किमयं विधत्तां
वध्यस्तवेत्यभिहितो वसुधाधिपेन ।
एधान् हुताशनवतः स मुनिर्ययाचे
पुत्रं परासुमनुगन्तुमनाः सदारः ॥ २२

Raghuvaṁśa IX.

---

## XI

## MALAYAKETU'S SUSPICIONS ABOUT THE MINISTER RĀKSHASA RECEIVE UNEXPECTED CONFIRMATION

( ततः प्रविशति प्रतीहार्यनुगम्यमानो मलयकेतुः )

**मलय०**—( स्वगतम् ) अहो राक्षसं प्रति विकल्पबाहुल्यादाकुला मे बुद्धिर्न निश्चयमधिगच्छति । कुतः ।

भक्त्या नन्दकुलानुरागदृढया नन्दान्वयालम्बिना
किं चाणक्यनिराकृतेन कृतिना मौर्येण सन्धास्यते ।
स्थैर्यं भक्तिगुणस्य वाधिगणयन्किं सत्यसन्धो भवे-
दित्यारूढकुलालचक्रमिव मे चेतश्चिरं भ्राम्यति ॥ १

( प्रकाशम् ) विजये क्व भागुरायणः ।

**प्रतीहारी**—कुमार, एष खलु कटकान्निष्क्रमितुकामानां मुद्रा-संप्रदानमनुतिष्ठति ।

**मलय०**—विजये मुहूर्तमसञ्चारा भव यावदस्य पराङ्मुखस्यैव पाणिभ्यां नयने पिदधामि ।

**प्रती०**—यत्कुमार आज्ञापयति ।

( प्रविश्य )

**पुरुषः**—आर्य एष खलु क्षपणको मुद्रानिमित्तमार्यं प्रेक्षितु-मिच्छति ।

**भागु०**—प्रवेशय

**पुरुषः**—तथेति । ( निष्क्रान्तः )

( प्रविश्य )

**क्षपणकः**—धर्मसिद्धिः श्रावकानां भवतु ।

**भागु०**—( स्वगतम् ) अये राक्षसस्य मित्रं जीवसिद्धिः । ( प्रकाशम् ) न खलु राक्षसस्य प्रयोजनमेव किंचिदुद्दिश्य गम्यते ।

**क्षप०**—शान्तं पापं शान्तं पापम् । श्रावक तत्र गमिष्यामि यत्र राक्षसस्य पिशाचस्य वा नामापि न श्रूयते ।

**भागु०**—बल्वान्सुहृदि प्रणयकोपः । तत्किमपराद्धं राक्षसेन भदन्तस्य ।

**क्षप०**—श्रावक न किमपि मम राक्षसेनापराद्धम् । स्वयमेव हताशो मन्दभाग्य आत्मनः कर्मसु लज्जे ।

**भागु०**—भदन्त वर्धयसि मे कुतूहलम् । श्रोतुमिच्छामि ।

**मलय०**—( स्वगतम् ) अहमपि श्रोतुमिच्छामि ।

**क्षप०**—श्रावक किमनेनाश्रोतव्येन श्रुतेन ।

**भागु०**—यदि रहस्यं तत्तिष्ठतु ।

**क्षप०**—न रहस्यं किंत्वतिनृशंसम् ।

**भागु०**—यदि न रहस्यं तत्कथ्यताम् ।

**क्षप०**—श्रावक न रहस्यमेतत्तथापि न कथयिष्यामि ।

**भागु०**—अहमपि मुद्रां न दास्यामि ।

**क्षप०**—( स्वगतम् ) युक्तमिदानीमर्थिने कथयितुम् । ( प्रकाशम् ) का गतिः । श्रृणोतु श्रावकः । अस्ति तावदहं मन्दभाग्यः प्रथमं पाटलिपुत्रे निवसता राक्षसेन मित्रत्वमुपगतः । तस्मिन्नवसरे राक्षसेन गूढविषकन्याप्रयोगमुत्पाद्य घातितः पर्वतेश्वरः ।

**मलय०**—( सबाष्पमात्मगतम् ) कथं राक्षसेन घातितस्तातो न चाणक्येन ।

**भागु०**—भदन्त ततस्ततः ।

**क्षप०**—ततोऽहं राक्षसस्य मित्रमिति कृत्वा चाणक्यहतकेन सनिकारं नगरान्निर्वासितः । इदानीमपि राक्षसेनानेकाकार्यकुशलेन किमपि तादृशमारभ्यते येनाहं जीवलोकान्निष्कासिष्ये ।

**भागु०**—प्रतिश्रुतं राज्यार्धमयच्छता चाणक्यहतकेनेदमकार्यमनुष्ठितं न राक्षसेनेति श्रुतमस्माभिः ।

**क्षप०**—( कर्णौ पिधाय ) शान्तं पापम् । चाणक्येन विषकन्याया नामापि न श्रुतम् ।

**भागु०**—मुद्रा दीयते । एहि कुमारं श्रावय ।

**मल०**—( उपसृत्य )

श्रुतं सखे श्रवणविदारणं वचः
सुहृन्मुखाद्रिपुमधिकृत्य भाषितम् ।

पितुर्वधव्यसनमिदं हि येन मे
चिरादपि द्विगुणमिवाद्य वर्धते ॥ २

क्षप०—( स्वगतम् ) अये श्रुतं मलयकेतुहतकेन । हन्त कृतार्थोस्मि । ( इति निष्क्रान्तः )

मलय०—( प्रत्यक्षवदाकाशे लक्ष्यं बद्ध्वा ) राक्षस राक्षस युक्तं युक्तम् ।

मित्रं ममेदमिति निर्वृतचित्तवृत्ति
विश्रम्भतस्त्वयि निवेशितसर्वकार्यम् ।
तातं निपात्य सह बन्धुजनाश्रुतोयै-
रन्वर्थतोऽपि ननु राक्षस राक्षसोऽसि ॥ ३

Mudrārākshasa V.

---

## XII

## DESCRIPTION OF A MORNING IN LANKĀ

अथास्तमासेदुषि मन्दकान्तौ पुण्यक्षयेणेव निधौ कलानाम् ।
समाललम्बे रिपुमित्रकल्पैः पद्मैः प्रहासः कुमुदैर्विषादः ॥ १

दूरं समारुह्य दिवः पतन्तं भृगोरिवेन्दुं विहितोपकारम् ।
बद्धानुरागोऽनुपपात तूर्णं तारागणः सम्भृतशुभ्रकीर्तिः ॥ २

शशाङ्कनाथापगमेन धूम्रां मूर्च्छापरीतामिव निर्विवेकाम् ।
ततः सखीव प्रथितानुरागा प्राबोधयद् द्यां मधुरारुणश्रीः ॥ ३

दुरुत्तरे पङ्क इवान्धकारे मग्नं जगत्सन्ततरश्मिरज्जुः ।
प्रणष्टमूर्तिप्रविभागमुद्यन् प्रत्युज्जहारेव ततो विवस्वान् ॥ ४

सुखावगाहानि युतानि लक्ष्म्या शुचीनि सन्तापहराण्युरूणि ।
प्रबुद्धनारीमुखपङ्कजानि प्रातः सरांसीव गृहाणि रेजुः ॥ ५

संमृष्टसिक्तार्चितचारुपुष्पैरामोदवद्भिर्व्यसुगन्धभागैः ।
लक्ष्मीर्विजिग्ये भवनैः सभृङ्गैः सेव्यस्य देवैरपि नन्दनस्य ॥ ६

अथानुकूलान्कुलधर्मसम्पदो विधाय वेशान् सुदिवः पुरीजनः ।
प्रबोधकाले शतमन्युविद्विषः प्रचक्रमे राजनिकेतनं प्रति ॥ ७

शैलेन्द्रशृङ्गेभ्य इव प्रवृत्ता वेगाज्जलौघाः पुरमन्दिरेभ्यः ।
आपूर्य रथ्याः सरितो जनौघा राजाङ्गनाम्भोधिमपूरयन्त ॥ ८

प्रबोधकालात्रिदशेन्द्रशत्रोः प्रागूर्ध्वशोषं परिशुष्यमाणाः ।
हीना महान्तश्च समत्वमीयुर्द्वाःस्थैरवज्ञापरुषाक्षिदृष्टाः ॥ ९

गुरूरुचञ्चत्करकर्णजिह्वैरवज्ञयाऽग्राङ्गुलिसङ्गृहीतैः ।
रक्षांस्यनायासहतैरुपास्थुः कपोललीनालिकुलैर्गजेन्द्रैः ॥ १०

उपेक्षिता देवगणैस्त्रसद्भिर्निशाचरैर्वीतभयैर्निकृत्ताः ।
तस्मिन्नदृश्यन्त सुरद्रुमाणां सजालपुष्पस्तवकाः प्रकीर्णाः ॥ ११

Bhaṭṭikāvya XI.

---

## XIII

### PRAHLĀDA AND HIRAṆYAKAŚIPU

पौरोहित्याय भगवान्वृतः काव्यः किलासुरैः ।
शण्डामर्कौ सुतौ तस्य दैत्यराजगृहान्तिके ॥ १

तौ राज्ञा प्रापितं बालं प्रह्लादं नयकोविदम् ।
पाठयामासतुः पाठ्यानन्यांश्चासुरबालकान् ॥ २

एकदाऽसुरराट् पुत्रमङ्कमारोप्य पाण्डव ।
पप्रच्छ कथ्यतां वत्स मन्यते साधु यद्भवान् ॥ ३

**प्रह्लाद उवाच ।**

तत्साधु मन्येऽसुरवर्य देहिनां सदा समुद्विग्नधियामसद्ग्रहात् ।
हित्वात्मपातं गृहमन्धकूपं वनं गतो यद्धरिमाश्रयेत ॥ ४

श्रुत्वा पुत्रगिरो दैत्यः परपक्षसमाहिताः ।
जहास बुद्धिर्बालानां भिद्यते परबुद्धिभिः ॥ ५

सम्यग्विधार्यतां बालो गुरुगेहे द्विजातिभिः ।
विष्णुपक्षैः प्रतिच्छन्नैर्न भिद्येतास्य धीर्यथा ॥ ६

गृहमानीतमाहूय प्रह्लादं दैत्ययाजकाः ।
प्रशस्य श्लक्ष्णया वाचा समपृच्छन्त सामभिः ॥ ७

वत्स प्रह्लाद भद्रं ते सत्यं कथय मा मृषा ।
बालानति कुतस्तुभ्यमेष बुद्धिविपर्ययः ॥ ८

बुद्धिभेदः परकृत उताहो ते स्वतोऽभवत् ।
भण्यतां श्रोतुकामानां गुरूणां कुलनन्दन ॥ ९

**प्रह्लाद उवाच ।**

स्वः परश्चेत्यसद्ग्राहः पुंसां यन्मायया कृतः ।
विमोहितधियां दृष्टस्तस्मै भगवते नमः ॥ १०

यथा भ्राम्यत्ययो ब्रह्मन्स्वयमाकर्षसन्निधौ ।
तथा मे भिद्यते चेतश्चक्रपाणेर्यदृच्छया ॥ ११

एतावद् ब्राह्मणायोक्त्वा विरराम महामतिः ।
तं निर्भर्त्स्याथ कुपितः स दीनो राजसेवकः ॥ १२

आनीयतामरे वेत्रमस्माकमयशस्करः ।
कुलाङ्गारस्य दुर्बुद्धेश्चतुर्थोऽस्योदितो दमः ॥ १३

दैतेयचन्दनवने जातोऽयं कण्टकद्रुमः ।
यन्मूलोन्मूलपरशोर्विष्णोर्नालायितोऽर्भकः ॥ १४

इति तं विविधोपायैर्भीषयंस्तर्जनादिभिः ।
प्रह्लादं ग्राहयामास त्रिवर्गस्योपपादनम् ॥ १५

तत एनं गुरुर्ज्ञात्वा ज्ञातज्ञेयचतुष्टयम् ।
दैत्येन्द्रं दर्शयामास मातृमृष्टमलङ्कृतम् ॥ १६

पादयोः पतितं बालं प्रतिनन्द्याशिषासुरः ।
परिष्वज्य चिरं दोर्भ्यां परमामाप निर्वृतिम् ॥ १७

आरोप्याङ्कमवघ्राय मूर्धन्यश्रुकलाम्बुभिः ।
आसिञ्चन्विकसद्वक्त्रमिदमाह युधिष्ठिर ॥ १८

प्रह्लादानूच्यतां तात स्वधीतं किंचिदुत्तमम् ।
कालेनैतावतायुष्मन्यदशिक्षद्गुरोर्भवान् ॥ १९

प्रह्लाद उवाच ।

श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् ।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ॥ २०

इति पुंसाऽर्पिता विष्णौ भक्तिश्चेन्नवलक्षणा ।
क्रियते भगवत्यद्धा तन्मन्येऽधीतमुत्तमम् ॥ २१

निशम्यैतत्सुतवचो हिरण्यकशिपुस्तदा ।
गुरुपुत्रमुवाचेदं रुषा प्रस्फुरिताधरः ॥ २२

ब्रह्मबन्धो किमेतत्ते विपक्षं श्रयतासता ।
असारं ग्राहितो बालो मामनादृत्य दुर्मते ॥ २३

गुरुपुत्र उवाच ।

न मत्प्रणीतं न परप्रणीतं सुतो वदत्येष तवेन्द्रशत्रो ।
नैसर्गिकीयं मतिरस्य राजन् नियच्छ मन्युं कददाः स्म मा नः ॥ २४

गुरुणैवं प्रतिप्रोक्तो भूय आहासुरः सुतम् ।
न चेद्गुरुमुखीयं ते कुतोऽभद्राऽसती मतिः ॥ २५

**प्रह्लाद उवाच ।**

मतिर्न कृष्णे परतः स्वतो वा
मिथोऽभिपद्येत गृहव्रतानाम् ।
अदान्तगोभिर्विशतां तमिस्रं
पुनः पुनश्चर्वितचर्वणानाम् ॥ २६

इत्युक्त्वोपरतं पुत्रं हिरण्यकशिपू रुषा ।
अन्धीकृतात्मा स्वोत्सङ्गान्निरस्यत महीतले २७

आहामर्षरुषाविष्टः कषायीभूतलोचनः ।
वध्यतामाश्वयं वध्यो निःसारयत नैर्ऋताः ॥ २८

अयं मे भ्रातृहा सोऽयं हित्वा स्वान्सुहृदोऽधमः ।
पितृव्यहन्तुर्यः पादौ विष्णोर्दासवदर्चति ॥ २९

परोऽप्यपत्यं हितकृद्यथौषधं
स्वदेहजोऽप्यामयवत्सुतोऽहितः ।
छिन्द्यात्तदङ्गं यदुतात्मनोऽहितं
शेषं सुखं जीवति यद्विवर्जनात् ॥ ३०

सर्वैरुपायैर्हन्तव्यः सम्भोजशयनासनैः ।
सुहृल्लिङ्गधरः शत्रुर्मुनेर्दुष्टमिवेन्द्रियम् ॥ ३१

हिमवाय्वग्निसलिलैः पर्वताक्रमणैरपि ।
न शशाक यदा हन्तुमपापमसुरः सुतम् ।
चिन्तां दीर्घतमां प्राप्तस्तत्कर्तुं नाभ्यपद्यत ॥ ३२

इति तं चिन्तया किंचिन्म्लानश्रियमधोमुखम् ।
शण्डामर्कावौशनसौ विविक्त इति होचतुः ॥ ३३

इमं तु पाशैर्वरुणस्य बद्ध्वा निधेहि भीतो न पलायते यथा ।
बुद्धिश्च पुंसो वयसाऽऽर्यसेवया यावद्गुरुर्भार्गव आगमिष्यति ॥ ३४

तथेति गुरुपुत्रोक्तमनुज्ञायेदमब्रवीत् ।
धर्मो ह्यस्योपदेष्टव्या राज्ञां ये गृहमेधिनाम् ॥ ३५

यदाचार्यः परावृत्तो गृहमेधीयकर्मसु ।
वयस्यैर्बालकैस्तत्र सोपहूतः कृतक्षणैः ॥ ३६

अथ तान् श्लक्ष्णया वाचा प्रत्याहूय महाबुधः ।
उवाच विद्वांस्तन्निष्ठां कृपया प्रहसन्निव ॥ ३७

**प्रह्लाद उवाच ।**

कौमार आचरेत्प्राज्ञो धर्मान्भागवतानिह ।
दुर्लभं मानुषं जन्म तदप्यध्रुवमर्थदम् ॥ ३८

सुखमैन्द्रियकं दैत्या देहयोगेन देहिनाम् ।
सर्वत्र लभ्यते दैवाद्यथा दुःखमयत्नतः ॥ ३९

पुंसो वर्षशतं ह्यायुस्तदर्धं चाजितात्मनः ।
निष्फलं यदसौ रात्र्यां शेतेऽन्धं प्रापितस्तमः ॥ ४०

मुग्धस्य बाल्ये कौमारे क्रीडतो याति विंशतिः ।
जरया ग्रस्तदेहस्य यात्यकल्पस्य विंशतिः ॥ ४१

दुरापूरेण कामेन मोहेन च बलीयसा ।
शेषं गृहेषु सक्तस्य प्रमत्तस्यापयाति हि ॥ ४२

ततो विदूरात्परिहृत्य दैत्या
दैत्येषु सङ्गं विषयात्मकेषु ।

उपेत नारायणमादिदेवं
स मुक्तसङ्गैरिषितोऽपवर्गः ॥ ४३

तस्मात्सर्वेषु भूतेषु दयां कुरुत सौहृदम् ।
आसुरं भावमुन्मुच्य यया तुष्यत्यधोक्षजः ॥ ४४

धर्मार्थकाम इति योऽभिहितस्त्रिवर्ग
ईक्षा त्रयी नयदमौ विविधा च वार्ता ।
मन्ये तदेतदखिलं निगमस्य सत्यं
स्वात्मार्पणं स्वसुहृदः परमस्य पुंसः ॥ ४५

ज्ञानं तदेतदमलं दुरवापमाह
नारायणो नरसखः किल नारदाय ।
एकान्तिनां भगवतस्तदकिञ्चनानां
पादारविन्दरजसाऽऽप्लुतदेहिनां स्यात् ॥ ४५

Bhāgavatapurāṇa VII.

---

## XIV

### EULOGY OF WOMAN

येप्यङ्गनानां प्रवदन्ति दोषान्वैराग्यमार्गेण गुणान्विहाय ।
ते दुर्जना मे मनसो वितर्कः सद्भाववाक्यानि न तानि तेषाम् ॥ १

प्रब्रूत सत्यं कतरोऽङ्गनानां दोषोऽस्ति यो नाचरितो मनुष्यैः ।
धार्ष्ट्येन पुम्भिः प्रमदा निरस्ता गुणाधिकास्ता मनुनात्र चोक्तम् ॥ २

सोमस्तासामदाच्छौचं गन्धर्वः शिक्षितां गिरम् ।
अग्निश्च सर्वभक्षित्वं तस्मान्निष्कसमाः स्त्रियः ॥ ३

जामयो यानि गेहानि शपन्त्यप्रतिपूजिताः ।
तानि कृत्याहतानीव विनश्यन्ति समन्ततः ॥ ४

अहो धाष्ट्र्यमसाधूनां निन्दतामनघाः स्त्रियः ।
मुष्णतामिव चौराणां तिष्ठ चौरेति जल्पताम् ॥ ५

पुरुषश्चटुलानि कामिनीनां कुरुते यानि रहो न तानि पश्चात् ।
सुकृतज्ञतयाङ्गना गतासूनवगुह्य प्रविशन्ति सप्तजिह्वम् ॥ ६

Bṛihatsaṁhitā.

---

## XV

### A SPECIMEN OF LYRIC POETRY

प्रलयपयोधिजले धृतवानसि वेदं
विहितवहित्रचरित्रमखेदम् ।
केशव धृतमीनशरीर जय जगदीश हरे ॥ १

क्षितिरतिविपुलतरे तव तिष्ठति पृष्ठे
धरणिधरणकिणचक्रगरिष्ठे ।
केशव धृतकच्छपरूप जय जगदीश हरे ॥ २

वसति दशनशिखरे धरणी तव लग्ना
शशिनि कलङ्ककलेव निमग्ना ।
केशव धृतशूकररूप जय जगदीश हरे ॥ ३

तव करकमलवरे नखमद्भुतशृङ्गं
दलितहिरण्यकशिपुतनुभृङ्गम् ।
केशव धृतनरहरिरूप जय जगदीश हरे ॥ ४

छलयसि विक्रमणे बलिमद्भुतवामन
पदनखनीरजनितजनपावन ।
केशव धृतवामनरूप जय जगदीश हरे ॥ ५

क्षत्रियरुधिरमये जगदपगतपापं
स्नपयसि पयसि शमितभवतापम् ।
केशव धृतभृगुपतिरूप जय जगदीश हरे ॥ ६

वितरसि दिक्षु रणे दिक्पतिकमनीयं
दशमुखमौलिबलिं रमणीयम् ।
केशव धृतरामशरीर जय जगदीश हरे ॥ ७

वहसि वपुषि विशदे वसनं जलदाभं
हलहतिभीतिमिलितयमुनाभम् ।
केशव धृतहलधररूप जय जगदीश हरे ॥ ८

निन्दसि यज्ञविधेरहह श्रुतिजातं
सदयहृदय दर्शितपशुघातम् ।
केशव धृतबुद्धशरीर जय जगदीश हरे ॥ ९

म्लेच्छनिवहनिधने कलयसि करवालं
धूमकेतुमिव किमपि करालम् ।
केशव धृतकल्किशरीर जय जगदीश हरे ॥ १०

श्रीजयदेवकवेरिदमुदितमुदारं
शृणु शुभदं सुखदं भवसारम् ।
केशव धृतदशविधरूप जय जगदीश हरे ॥ ११

Gītagovinda.

# XVI

## PRINCE VIKRAMĀDITYA OF THE CHĀLUKYA RACE REFUSES THE POSITION OF HEIR-APPARENT OUT OF REGARD FOR HIS ELDEST BROTHER

सर्वासु विद्यासु किमप्यकुण्ठमुत्कण्ठमानं समरोत्सवेभ्यः ।
श्रीविक्रमादित्यमथावलोक्य स चिन्तयामास नृपः कदाचित् ॥ १

अलङ्करोत्यद्भुतसाहसाङ्कः सिंहासनं चेदयमेकवीरः ।
एतस्य सिंहीमिव राजलक्ष्मीमङ्कस्थितां कः क्षमतेऽभियोक्तुम् ॥ २

करोमि तावद्युवराजमेनमत्यक्तसाम्राज्यभरस्तनूजम् ।
तदद्वयीसंश्रयणाद्दधातु धुनीव साधारणतां नृपश्रीः ॥ ३

एवं विनिश्चित्य कृतप्रयत्नमूचे कदाचित्पितरं प्रणम्य ।
सरस्वतीनूपुरसिञ्जितानां सहोदरेण ध्वनिना कुमारः ॥ ४

आज्ञा शिरश्चुम्बति पार्थिवानां त्यागोपभोगेषु वशे स्थिता श्रीः ।
तव प्रसादात्सुलभं समस्तं मास्तामयं मे युवराजभावः ॥ ५

जगाद देवोऽथ मदीप्सितस्य किं वत्स धत्से प्रतिकूलभावम् ।
ननु त्वदुत्पत्तिपरिश्रमे मे स चन्द्रचूडाभरणः प्रमाणम् ॥ ६

धत्से जगद्रक्षणयामिकत्वं न चेत्त्वमङ्गीकृतयौवराज्यः ।
मौर्वीरवापूरितदिङ्मुखस्य क्लान्तिः कथं शाम्यतु मद्भुजस्य ॥ ७

आकर्ण्य कर्णाटपतेः सखेदमित्थं वचः प्रत्यवदत्कुमारः ।
सरस्वतीलोलदुकूलकान्तां प्रकाशयन्दन्तमयूखलेखाम् ॥ ८

वाचालतैषां पुरतः कवीनां कान्त्या मदोयं सविधे सुधांशौ ।
त्वत्सन्निधौ पाटवनाटनं यत्तथापि भक्त्या किमपि ब्रवीमि ॥ ९

विचारचातुर्यमपाकरोति तातस्य भूयान्मयि पक्षपातः ।
ज्येष्ठे तनूजे सति सोमदेवे न यौवराज्येऽस्ति ममाधिकारः ॥ १०

चालुक्यवंशोऽपि यदि प्रयाति पात्रत्वमाचारविपर्ययस्य ।
अहो महद्वैशसमाः किमन्यदनङ्कुशोऽभूत्कलिकुञ्जरोऽयम् ॥ ११

लक्ष्म्याः करं ग्राहयितुं तदादौ तातस्य योग्यः स्वयमग्रजो मे ।
कार्यं विपर्यासमलीमसेन न मे नृपश्रीपरिरम्भणेन ॥ १२

ज्येष्ठं परिम्लानमुखं विधाय भवामि लक्ष्मीप्रणयोन्मुखश्चेत् ।
किमन्यदन्यायपरायणेन मयैव गोत्रे लिखितः कलङ्कः ॥ १३

तातश्चिरं राज्यमलङ्करोतु ज्येष्ठे ममारोहतु यौवराज्यम् ।
सलीलमाक्रान्तदिगन्तरोऽहं द्वयोः पदातिव्रतमुद्वहामि ॥ १४

रामस्य पित्रा भरतोऽभिषिक्तः क्रमं समुल्लङ्घ्य यदात्मराज्ये ।
तेनोत्थिता स्त्रीजित इत्यकीर्तिरद्यापि तस्यास्ति दिगन्तरेषु ॥ १५

तदेष विश्राम्यतु कुन्तलेन्द्र यशोविरोधी मयि पक्षपातः ।
न किं समालोचयति क्षितीन्दुरायासशून्यं मम यौवराज्यम् ॥ १६

पुत्राद्वचः श्रोत्रपवित्रमेवं श्रुत्वा चमत्कारमगान्नरेन्द्रः ।
इयं हि लक्ष्मीर्धुरि पांसुलानां केषां न चेतः कलुषीकरोति ॥ १७

सस्नेहमङ्के विनिवेश्य चैनमुवाच रोमाञ्चतरङ्गिताङ्गः ।
क्षिपन्निवात्युज्ज्वलदन्तकान्त्या प्रसादमुक्तावलिमस्य कण्ठे ॥ १८

भाग्यैः प्रभूतैर्भगवानसौ मे सत्यं भवानीदयितः प्रसन्नः ।
चालुक्यगोत्रस्य विभूषणं यत्पुत्रं प्रसादीकृतवान्भवन्तम् ॥ १९

एतानि निर्यान्ति वचांसि वक्त्रात्कस्यापरस्य श्रवणामृतानि ।
मधूनि लेह्यानि सुरद्विरेफैर्न पारिजातादपरः प्रसूते ॥ २०

यस्याः कृते भूमिभृतां कुमाराः केषां न पात्रं नयविप्लवानाम् ।
उन्मत्तमातङ्गसहस्रगुर्वी सा राज्यलक्ष्मीस्तृणवल्लघुस्ते ॥ २१

जानामि मार्गं भवतोपदिष्टं ममापि चालुक्यकुले प्रसूतिः ।
किं त्वत्र लक्ष्मीर्गुणबन्धहीने निसर्गलोला कथमेति दार्ढ्यम् ॥ २२

तन्मे प्रमाणीकुरु वत्स वाक्यं चालुक्यलक्ष्मीश्चिरमुन्नतास्तु ।
निर्मत्सराः क्षोणिभृतः स्तुवन्तु ममाकलङ्कं गुणपक्षपातम् ॥ २३

श्रुत्वेति वाक्यं पितुरादरेण जगाद भूयो विहसन्कुमारः ।
मद्भाग्यदोषेण दुराग्रहोऽयं तातस्य मत्कीर्तिकलङ्कहेतुः ॥ २४

अशक्तिरस्यास्ति न दिग्जयेषु यस्यानुजोऽहं शिरसा धृताज्ञः ।
स्थानस्थ एवाद्भुतकार्यकारी बिभर्तु रक्षामणिना समत्वम् ॥ २५

इत्यादिभिश्चित्रतरैर्वचोभिः कृत्वा पितुः कौतुकमुत्सवं च ।
अकारयज्ज्येष्ठमुदारशीलः स यौवराज्यप्रतिपत्तिपात्रम् ॥ २६

Vikramāṅkadevacharita III.

---

## XVII

### THE MARRIAGE OF PĀRVATĪ AND ŚIVA

एकैव सत्यामपि पुत्रपङ्क्तौ चिरस्य दृष्टेव मृतोत्थितेव ।
आसन्नपाणिग्रहणेति पित्रोरुमा विशेषोच्छ्वसितं बभूव ॥ १

अङ्काद्ययावङ्कमुदीरिताशीः सा मण्डनान्मण्डनमन्वभुङ्क्त ।
सम्बन्धिभिन्नोऽपि गिरेः कुलस्य स्नेहस्तदेकायतनं जगाम ॥ २

मैत्रे मुहूर्ते शशलाञ्छनेन योगं गतासूत्तरफल्गुनीषु ।
तस्याः शरीरे प्रतिकर्म चक्रुर्बन्धुस्त्रियो याः पतिपुत्रवत्यः ॥ ३

बभौ च सम्पर्कमुपेत्य बाला नवेन दीक्षाविधिसायकेन ।
करेण भानोर्बहुलावसाने सन्धुक्ष्यमाणेव शशाङ्करेखा ॥ ४

सा मङ्गलस्नानविशुद्धगात्री गृहीतपत्युद्गमनीयवस्त्रा ।
निर्वृत्तपर्जन्यजलाभिषेका प्रफुल्लकाशा वसुधेव रेजे ॥ ५

तस्मात्प्रदेशाच्च वितानवन्तं युक्तं मणिस्तम्भचतुष्टयेन ।
पतिव्रताभिः परिगृह्य निन्ये कॢप्तासनं कौतुकवेदिमध्यम् ॥ ७

तां प्राङ्मुखीं तत्र निवेश्य तन्वीं क्षणं व्यलम्बन्त पुरो निषण्णाः ।
भूतार्थशोभाह्रियमाणनेत्राः प्रसाधने सन्निहितेऽपि नार्यः ॥ ७

धूपोष्मणा त्याजितमार्द्रभावं केशान्तमन्तःकुसुमं तदीयम् ।
पर्याक्षिपत् काचिदुदारबन्धं दूर्वावता पाण्डुमधूकदाम्ना ॥ ८

विन्यस्तशुक्लागुरु चक्रुरङ्गं गोरोचनापत्रविभक्तमस्याः ।
सा चक्रवाकाङ्कितसैकतायास्त्रिस्रोतसः कान्तिमतीत्य तस्थौ ॥ ९

सा सम्भवद्भिः कुसुमैर्लतेव ज्योतिर्भिरुद्यद्भिरिव त्रियामा ।
सरिद्विहङ्गैरिव लीयमानैरामुच्यमानाभरणा चकाशे ॥ १०

आत्मानमालोक्य च शोभमानमादर्शबिम्बे स्तिमितायताक्षी ।
हरोपयाने त्वरिता बभूव स्त्रीणां प्रियालोकफलो हि वेषः ॥ ११

क्षीरोदवेलेव सफेनपुञ्जा पर्याप्तचन्द्रेव शरत्त्रियामा ।
नवं नवक्षौमनिवासिनी सा भूयो बभौ दर्पणमादधाना ॥ १२

तामर्चिताभ्यः कुलदेवताभ्यः कुलप्रतिष्ठां प्रणमय्य माता ।
अकारयत्कारयितव्यदक्षा क्रमेण पादग्रहणं सतीनाम् ॥ १३

अखण्डितं प्रेम लभस्व पत्युरित्युच्यते ताभिरुमा स्म नम्रा ।
तया तु तस्यार्धशरीरभाजा पश्चात्कृताः स्निग्धजनाशिषोऽपि ॥ १४

इच्छाविभूत्योरनुरूपमद्रिस्तस्याः कृती कृत्यमशेषयित्वा ।
सभ्यः सभायां सुहृदास्थितायां तस्थौ वृषाङ्कागमनप्रतीक्षः ॥ १५

स गोपतिं नन्दिभुजावलम्बी शार्दूलचर्मान्तरितोरुपृष्ठम् ।
तद्भक्तिसंक्षिप्तबृहत्प्रमाणमारुह्य कैलासमिव प्रतस्थे ॥ १६

तं लोकपालाः पुरुहूतमुख्याः श्रीलक्षणोत्सर्गविनीतवेषाः ।
दृष्टिप्रदाने कृतनन्दिसंज्ञास्तद्दर्शिताः प्राञ्जलयः प्रणेमुः ॥ १७

कम्पेन मूर्ध्नः शतपत्रयोनिं वाचा हरिं वृत्रहणं स्मितेन ।
आलोकमात्रेण सुरानशेषान् सम्भावयामास यथाप्रधानम् ॥ १८

तस्मै जयाशीः ससृजे पुरस्तात्सप्तर्षिभिस्तान् स्मितपूर्वमाह ।
विवाहयज्ञे विततेऽत्र यूयमध्वर्यवः पूर्ववृता मयेति ॥ १९

तमृद्धिमद्बन्धुजनाधिरूढैर्वृन्दैर्गजानां गिरिचक्रवर्ती ।
प्रत्युज्जगामागमनप्रतीतः प्रफुल्लवृक्षैः कटकैरिव स्वैः ॥ २०

ह्रीमानभूद्भूमिधरो हरेण त्रैलोक्यवन्द्येन कृतप्रणामः ।
पूर्वं महिम्ना स हि तस्य दूरमावर्जितं नात्मशिरो विवेद ॥ २१

स प्रीतियोगाद्विकसन्मुखश्रीर्जामातुरग्रेसरतामुपेत्य ।
प्रावेशयन्मन्दिरमृद्धमेनमागुल्फकीर्णापणमार्गपुष्पम् ॥ २२

तस्मिन्मुहूर्ते पुरसुन्दरीणामीशानसंदर्शनलालसानाम् ।
प्रासादमालासु बभूवुरित्थं त्यक्तान्यकार्याणि विचेष्टितानि ॥ २३

स्थाने तपो दुश्चरमेतदर्थमपर्णया पेलवयाऽपि तप्तम् ।
या दास्यमप्यस्य लभेत नारी सा स्यात्कृतार्था किमुताङ्कशय्याम् ॥ २४

परस्परेण स्पृहणीयशोभं न चेदिदं द्वन्द्वमयोजयिष्यत् ।
अस्मिन्द्वये रूपविधानयत्नः पत्युः प्रजानां विफलोऽभविष्यत् ॥ २५

अनेन सम्बन्धमुपेत्य दिष्ट्या मनोरथप्रार्थितमीश्वरेण ।
मूर्धानमालि क्षितिधारणोच्चमुच्चैस्तरं वक्ष्यति शैलराजः ॥ २६

तत्रेश्वरो विष्टरभाग्यथावत् सरत्नमर्घ्यं मधुमच्च गव्यम् ।
नवे दुकूले च नगोपनीतं प्रत्यग्रहीत्सर्वममन्त्रवर्जम् ॥ २७

दुकूलवासाः स वधूसमीपं निन्ये विनीतैरवरोधदक्षैः ।
वेलासमीपं स्फुटफेनराजिर्नवैरुदन्वानिव चन्द्रपादैः ॥ २८

तया प्रवृद्धाननचन्द्रकान्त्या प्रफुल्लचक्षुःकुमुदः कुमार्या ।
प्रसन्नचेतःसलिलः शिवोऽभूत्संसृज्यमानः शरदेव लोकः ॥ २९

प्रमुक्तपाणिग्रहणं यदन्यद्वधूवरं पुष्यति कान्तिमग्र्याम् ।
सान्निध्ययोगादनयोस्तदानीं किं कथ्यते श्रीरुभयस्य तस्य ॥ ३०

तौ दम्पती त्रिः परिणीय वह्निमन्योन्यसंस्पर्शनिमीलिताक्षौ ।
स कारयामास वधूं पुरोधास्तस्मिन्समिद्धार्चिषि लाजमोक्षम् ॥ ३१

सा लाजधूमाञ्जलिमिष्टगन्धं गुरूपदेशाद्वदनं निनाय ।
कपोलसंसर्पिशिखः स तस्या मुहूर्तकर्णोत्पलतां प्रपेदे ॥ ३२

वधूं द्विजः प्राह तवैष वत्से वह्निर्विवाहं प्रति कर्मसाक्षी ।
शिवेन भर्त्रा सहधर्मचर्या कार्या त्वया मुक्तविचारयेति ॥ ३३

आलोचनान्तं श्रवणं वितत्य पीतं गुरोस्तद्वचनं भवान्या ।
निदाघकालोल्बणतापयेव माहेन्द्रमम्भः प्रथमं पृथिव्या ॥ ३४

ध्रुवेण भर्त्रा ध्रुवदर्शनाय प्रयुज्यमाना प्रियदर्शनेन ।
सा दृष्ट इत्याननमुन्नमय्य ह्रीसन्नकण्ठी कथमप्युवाच ॥ ३५

इत्थं विधिज्ञेन पुरोहितेन प्रयुक्तपाणिग्रहणोपचारौ ।
प्रणेमतुस्तौ पितरौ प्रजानां पद्मासनस्थाय पितामहाय ॥ ३६

Kumārasambhava VII.

---

## XVIII

### AN ADDRESS TO THE GANGES

यदन्तः खेलन्तो बहुलतरसन्तोषभरिता
न काका नाकाधीश्वरनगरसाकांक्षमनसः ।
निवासाल्लोकानां जनिमरणशोकापहरणं
तदेतत्ते तीरं श्रमशमनधीरं भवतु नः ॥ १

विनिन्द्यान्युन्मत्तैरपि च परिहार्याणि पतितै-
रवाच्यानि व्रात्यैः सपुलकमपास्यानि पिशुनैः ।
हरन्ती लोकानामनवरतमेनांसि कियतां
कदाप्यश्रान्ता त्वं जगति पुनरेका विजयसे ॥ २

स्वभावस्वच्छानां सहजशिशिराणामयमपा-
मपारस्ते मातर्जयति महिमा कोऽपि जगति ।
मुदा यं गायन्ति द्युतलमनवद्यद्युतिभृतः
समासाद्याद्यापि स्फुटपुलकसांद्राः सगरजाः ॥ ३

पुरो धावं धावं द्रविणमदिराघूर्णितदृशां
महीपानां नानातरुणतरखेदस्य नियतम् ।
ममैवायं मन्तुः स्वहितशतहन्तुर्जडधियो
वियोगस्ते मातर्यदिह करुणातः क्षणमपि ॥ ४

अनाथः स्नेहार्द्रां विगलितगतिः पुण्यगतिदां
पतन् विश्वोद्धर्त्रीं गदविगलितः सिद्धभिषजम् ।

सुधासिन्धुं तृष्णाकुलितहृदयो मातरमयं
शिशुः संप्राप्तस्त्वामहमिह विदध्याः समुचितम् ॥ ५

श्वपाकानां व्रातैरमितविचिकित्साविचलितै-
र्विमुक्तानामेकं किल सदनमेनःपरिषदाम् ।
अहो मामुद्धर्तुं जननि घटयन्त्याः परिकरं
तव श्लाघां कर्तुं कथमिव समर्थो नरपशुः ॥ ६

श्ववृत्तिव्यासङ्गो नियतमथ मिथ्याप्रलपनं
कुतर्केष्वभ्यासः सततपरपैशुन्यमननम् ।
अपि श्रावं श्रावं मम तु पुनरेवं गुणगणा-
नृते त्वत्को नाम क्षणमपि निरीक्षेत वदनम् ॥ ७

अलभ्यं सौरभ्यं हरति सततं यः सुमनसां
क्षणादेव प्राणानपि विरहशास्त्रक्षतहृदाम् ।
त्वदीयानां लीलाचलितलहरीणां व्यतिकरात्
पुनीते सोऽपि द्रागहह पवमानस्त्रिभुवनम् ॥ ८

सदैव त्वय्येवार्पितकुशलचिन्ताभरमिमं
यदि त्वं मामम्ब त्यजसि समयेऽस्मिन्सुविषमे ।
तदा विश्वासोऽयं त्रिभुवनतलादस्तमयते
निराधारा चेयं भवति खलु निर्व्याजकरुणा ॥ ९

ललाटे या लोकैरिह खलु सलीलं तिलकिता
तमो हन्तुं धत्ते तरुणतरमार्तण्डतुलनाम् ।
विलुम्पन्ती सद्यो विधिलिखितदुर्वर्णसरणिं
त्वदीया सा मृत्स्ना मम हरतु कृत्स्नामपि शुचम् ॥ १०

अविश्रान्तं जन्मावधिसुकृतजन्मार्जनकृतां

सतां श्रेयः कर्तुं कति न कृतिनः सन्ति विबुधाः ।

निरस्तालम्बानामकृतसुकृतानां तु भवतीं

विनामुष्मिँल्लोके न परमवलोके हितकरम् ॥ ११

पयः पीत्वा मातस्तव सपदि यातः सहचरै-

र्विमूढैः संरन्तुं क्वचिदपि न विश्रान्तिमगमम् ।

इदानीमुत्सङ्गे मृदुपवनसञ्चारशिशिरे

चिरादुन्निद्रं मां सदयहृदये शायय चिरम् ॥ १२

Gangālaharī.

---

# XIX

## अन्योक्तयः

खद्योतो द्योतते तावद्यावन्नोदयते शशी ।

उदिते तु सहस्रांशौ न खद्योतो न चन्द्रमाः ॥ १

यत्पादाः शिरसा न केन विधृताः पृथ्वीभृतां मध्यत–

स्तस्मिन्भास्वति राहुणा कवलिते लोकत्रयीचक्षुषि ।

खद्योतैः स्फुरितं तमोभिरुदितं ताराभिरुज्जृम्भितं

घूकैरुत्थितमाः किमत्र करवै किं किं न कैश्चेष्टितम् ॥ २

परिमलस्यायम् ।

कलास्तास्ताः सम्यग्वहसि यदसि त्वं द्विजपति-

र्द्युतिस्तादृग्भूता जनिरपि च रत्नाकरकुले ।

बहु ब्रूमः किं वा पुरहरशिरोमण्डनमसि

त्वदीयं तत्सर्वं शशधर कलङ्काद्विफलितम् ॥ ३

लक्ष्मणस्य

जन्म क्षीरमहार्णवे सहभुवः श्रीपारिजातादयो
  विम्बं यस्य सुधामयं त्रिभुवनाधीशस्य मूर्ध्नि स्थितिः ।
इत्थं सर्वचराचरप्रियकरे यस्योदये चेद्भवे-
  त्सङ्कोचः कमलस्य दुष्कृतिरसौ निन्द्यो न ताराधिपः ॥ ४

उत्पत्तिर्जलधौ सुधा सहचरी ज्योत्स्नाभिरामा तनुः
  स्थानं व्योम कुमुद्वतीपरिवृढश्चन्द्रेति नाम स्फुटम् ।
सर्वं चारु तथापि हन्त कठिना यत्त्वां कलङ्काङ्कितं
  जल्पन्ति प्रतिवासरं सुरगणास्तेनाति दूयामहे ॥ ५

भङ्गवीरेश्वरस्य

वितर वारिद वारि दवातुरे
  चिरपिपासितचातकपोतके ।
प्रचलिते मरुति क्षणमन्यथा
  क्व च भवान् क्व पयः क्व च चातकः ॥ ६

तवैव प्रावीण्यं जलद जगदानन्दकरणं
  यदम्भःपालीराहरसि खलसत्त्वाज्जलनिधेः ।
निसर्गात्क्षारास्ता नयसि च कथंचिन्मधुरता-
  मथासारैस्तासां युगपदुपकर्तासि जगतः ॥ ७

आदाय वारि परितः सरितां मुखेभ्यः
  किं तावदर्जितमनेन दुरर्णवेन ।
क्षारीकृतं च वडवादहने हुतं च
  पातालकुक्षिकुहरे विनिवेशितं च ॥ ८

पीयूषेण सुराः श्रिया मुररिपुर्मर्यादया मेदिनी
  शक्रः कल्पलहा शशाङ्ककलया श्रीशङ्करस्तोषितः ।

मैनाकादिनगा निजोदरगताः संस्थानतः स्थापिता-
स्त्वच्चूलीकरणे घटोद्भवमुनिः केनापि नो वारितः ॥ ९

रात्रिर्गमिष्यति भविष्यति सुप्रभातं
भास्वानुदेष्यति हसिष्यति पङ्कजश्रीः ।
इत्थं विचिन्तयति कोषगते द्विरेफे
हा हन्त हन्त नलिनीं गज उज्जहार ॥ १०

किं क्वापि प्रलयानलैर्विटपिनो निर्दह्य भस्मीकृताः
किंचिद्देवगजेन पङ्कजवनं निष्कन्दमुन्मूलितम् ।
किं वा हन्त कृतान्तकेसरिभयात्त्यक्तो मदः कुञ्जरै-
र्येनास्मिन्विरसे करीरकुसुमे हा भृङ्ग विश्राम्यसि ॥ ११

रे रे कोकिल मा भज मौनं किञ्चिदुदञ्चय पञ्चमरागम् ।
नो चेत्त्वामिह को जानीते काककदम्बकपिहिते चूते ॥ १२

किं कोमलैः कलरवैः पिक तिष्ठ तूष्णी-
मेते तु पामरनराः स्वरमाकलय्य ।
को वा रटत्ययमये निकटे कटूनि
रे बध्यतामिति वदन्ति गृहीतदण्डाः ॥ १३

लक्ष्मणस्य

केलिं कुरुष्व परिभुङ्क्ष्व सरोरुहाणि
गाहस्व शैलतटनिर्झरिणीपयांसि ।
भावानुरक्तकरिणीकरलालिताङ्ग
मातङ्ग मुञ्च मृगराजरणाभिलाषम् ॥ १४

आनन्दवर्धनस्य

गिरिगह्वरेषु गुरुगर्वगुम्फितो गजराजपोत न कदापि सञ्चरेः ।
यदि बुध्यते हरिशिशुः स्तनंधयो भविता करेणुपरिशेषिता मही ॥ १५

कति न सन्ति महीषु महीरुहः
सुरभिपुष्परसालफलालयः ।
सुरभयन्ति न केऽपि च भूरुहा-
निति यशोऽस्ति परं तव चन्दन ॥ १६

सौरभ्यं भुवनत्रयेऽपि विदितं शैत्यं नु लोकोत्तरं
कीर्तिः किं च दिगङ्गनाङ्गनगता किं त्वेतदेकं शृणु ।
सर्वानेव गुणानियं निगिरति श्रीखण्ड ते सुन्दरा-
नुज्झन्ती खलु कोटरेषु गरलज्वालां द्विजिह्वावली ॥ १७

## अर्थसादृश्यम्

१ सहसा विदधीत न क्रियामविवेकः परमापदां पदम् ।
वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः ॥ १

भारवेः

गुणवदगुणवद्वा कुर्वता कार्यमादौ
परिणतिरवधार्या यत्नतः पण्डितेन ।
अतिरभसकृतानां कर्मणामा विपत्ते-
र्भवति हृदयदाही शल्यतुल्यो विपाकः ॥ २ भर्तृहरेः

२ आ परितोषाद्विदुषां न साधु मन्ये प्रयोगविज्ञानम् ।
बलवदपि शिक्षितानामात्मन्यप्रत्ययं चेतः ॥ ३ कालिदासस्य

त्वत्सम्भावितात्मानं बहु मन्यावहे वयम् ।
प्रायः प्रत्ययमाधत्ते स्वगुणेषूत्तमादरः ॥ ४ कुमारसम्भवे

मम तावन्मतमिदं श्रूयतामङ्ग वामपि ।
ज्ञातसारोऽपि खल्वेकः सन्दिग्धे कार्यवस्तुनि ॥ ५ माघस्य

३ शिशुर्वा शिष्या वा यदसि मम तत्तिष्ठतु तथा
विशुद्धेरुत्कर्षस्त्वयि तु मम भक्तिं जनयति ।
शिशुत्वं स्त्रैणं वा भवतु ननु वन्द्याऽसि जगतो
गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः ॥ ६
भवभूतेः

इयमिष्टगुणाय रोचतां रुचिरार्था भवतेऽपि भारती ।
ननु वक्तृविशेषनिःस्पृहा गुणगृह्या वचने विपश्चितः ॥ ७ भारवेः

तामगौरवभेदेन मुनींश्चापश्यदीश्वरः ।
स्त्री पुमानित्यनास्थैषा वृत्तं हि महितं सताम् ॥ ८ कालिदासस्य

४ व्यतिषजति पदार्थानान्तरः कोऽपि हेतु-
र्न खलु बहिरुपाधीन्प्रीतयः संश्रयन्ते ।
विकसति हि पतङ्गस्योदये पुण्डरीकं
द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः ॥ ९ भवभूतेः

भवति हृदयहारी क्वापि कस्यापि कश्चि-
न्न खलु गुणविशेषः प्रेमबन्धप्रयोगे ।
किसलयति वनान्ते कोकिलालापरम्ये
विकसति न वसन्ते मालती कोऽत्र हेतुः ॥ १०
नलचम्प्वाम्

५ तमवेक्ष्य रुरोद सा भृशं स्तनसम्बाधमुरो जघान च ।
स्वजनस्य हि दुःखमग्रतो विवृतद्वारमिवोपजायते ॥ ११

कालिदासस्य

सन्तानवाहीन्यपि मानुषाणां दुःखानि सद्बन्धुवियोगजानि ।
दृष्टे जने प्रेयसि दुःसहानि स्रोतःसहस्रैरिव संप्लवन्ते ॥ १२

भवभूतेः

६ वंशभवो गुणवानपि सङ्गविशेषेण पूज्यते पुरुषः ।
न हि तुम्बीफलविकलो वीणादण्डः प्रयाति महिमानम् ॥ १३

सन्तप्तायसि संस्थितस्य पयसो नामापि न ज्ञायते
मुक्ताकारतया तदेव नलिनीपत्रस्थितं राजते ।
स्वात्यां सागरशुक्तिमध्यपतितं सन्मौक्तिकं जायते
प्रायेणाधममध्यमोत्तमदशा संसर्गतो जायते ॥ १४ भर्तृहरेः

मन्दोऽप्यमन्दतामेति संसर्गेण विपश्चितः ।
पङ्कच्छिदः फलस्येव निकषेणाविलं पयः ॥ १५

कालिदासस्य

७ सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम् ।
पर्यायेणोपसर्पन्ते नरं नेमिमरा इव ॥ १६ वनपर्वणि

कस्यात्यन्तं सुखमुपनतं दुःखमेकान्ततो वा ।
नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण ॥ १७ मेघदूते

द्वन्द्वानि सर्वस्य यतः प्रसक्तान्यलाभलाभप्रभृतीनि लोके ।
अतोऽपि नैकान्तसुखोऽस्ति कश्चिन्नैकान्तदुःखः पुरुषः पृथिव्याम् ॥ १८

बुद्धचरिते

८ धर्मार्थे क्षीणवित्तस्य क्षीणत्वमपि शोभते ।
सुरैः पीतावशेषस्य कृष्णपक्षे विधोरिव ॥ १९

कामन्दकस्य

स्थाने भवानेकनराधिपः सन्नकिञ्चनत्वं मखजं व्यनक्ति ।
पर्यायपीतस्य सुरैर्हिमांशोः कलाक्षयः श्लाघ्यतरो हि वृद्धेः ॥ २०

कालिदासस्य

९ सरसिजमनुविद्धं शैवलेनापि रम्यं
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति ।
इयमधिकमनोज्ञा वल्कलेनापि तन्वी
किमिव हि मधुराणां मण्डनं नाकृतीनाम् ॥ २१

शाकुन्तले

यथा प्रसिद्धैर्मधुरं शिरोरुहैर्जटाभिरप्येवमभूत्तदाननम् ।
न षट्पदश्रेणिभिरेव पङ्कजं सशैवलासङ्गमपि प्रकाशते ॥ २२

कुमारसम्भवे

१० अनन्तरत्नप्रभवस्य यस्य हिमं न सौभाग्यविलोपि जातम् ।
एको हि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्कः ॥ २३

कालिदासस्य

प्रत्यार्द्रीकृततिलकास्तुषारपातैः
प्रह्लादं शमितपरिश्रमा दिशन्तः ।
कान्तानां बहुमतिमाययुः पयोदा
नाल्पीयान् बहु सुकृतं हिनस्ति दोषः ॥ २४ भारवेः

११ ननु वज्रिण एव वीर्यमेतद्विजयन्ते द्विषतो यदस्य पक्ष्याः ।
वसुधाधरकन्दराभिसर्पी प्रतिशब्दोऽपि हरेर्भिनत्ति नागान् ॥ २५

विक्रमोर्वशीये

सिध्यन्ति कर्मसु महत्स्वपि यन्नियोज्याः
सम्भावनागुणमवेहि तमीश्वराणाम् ।
किं वाऽभविष्यदरुणस्तमसां विभेत्ता
तं चेत्सहस्रकिरणो धुरि नाकरिष्यत् ॥ २६ शाकुन्तले

१२ चीयते बालिशस्यापि सत्क्षेत्रपतिता कृषिः ।
न शालेः स्तम्बकरिता वप्तुर्गुणमपेक्षते ॥ २७ विशाखदत्तस्य

पात्रविशेषे न्यस्तं गुणान्तरं व्रजति शिल्पमाधातुः ।
पय इव समुद्रशुक्तौ मुक्ताफलतां पयोदस्य ॥ २८ कालिदासस्य

वितरति गुरुः प्राज्ञे विद्यां यथैव तथा जडे
न तु खलु तयोर्ज्ञाने शक्तिं करोत्यपहन्ति वा ।
भवति च पुनर्भूयान्भेदः फलं प्रति तद्यथा
प्रभवति शुचिर्बिम्बोद्ग्राहे मणिर्न मृदां चयः ॥ २९

भवभूतेः

१३ अकीर्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम् ।
सम्भावितस्य चाकीर्तिर्मरणादतिरिच्यते ॥ ३०

भगवद्गीतायाम्

न भीतो मरणादस्मि केवलं दूषितं यशः ।
विशुद्धस्य हि मे मृत्युः पुत्रजन्मसमः किल ॥ ३१

शूद्रकस्य

यदि समरमपास्य नास्ति मृत्योर्भयमिति युक्तमितोऽन्यतः प्रयातुम् ।
अथ मरणमवश्यमेव जन्तोः किमिति मुधा मलिनं यशः कुरुध्वे ॥ ३२

भट्टनारायणस्य

निश्चित्य चानन्यनिवृत्ति वाच्यं त्यागेन पत्न्याः परिमार्ष्टुमैच्छत् ।
अपि स्वदेहात्किमुतेन्द्रियार्थाद्यशोधनानां हि यशो गरीयः ॥ ३३

कालिदासस्य

१४ जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।
तस्मादपरिहार्येऽर्थे नैवं शोचितुमर्हसि ॥ ३४ भगवद्गीतायाम्
मरणं प्रकृतिः शरीरिणां विकृतिर्जीवितमुच्यते बुधैः ।
क्षणमप्यवतिष्ठते श्वसन्यदि जन्तुर्ननु लाभवानसौ ॥ ३५

कालिदासस्य

१५ अवैमि चैनामनघेति किंतु लोकापवादो बलवान्मतो मे ।
छाया हि भूमेः शशिनो मलत्वेनारोपिता शुद्धिमतः प्रजाभिः ॥ ३६

कालिदासस्य

कष्टं जनः कुलधनैरनुरञ्जनीय-
स्तन्नो यदुक्तमशिवं न हि तत्क्षमं ते ।
नैसर्गिकी सुरभिणः कुसुमस्य सिद्धा
मूर्ध्नि स्थितिर्न चरणैरवताडनानि ॥ ३७ भवभूतेः

१६ यः स्वभावो हि यस्यास्ति स नित्यं दुरतिक्रमः ।
श्वा यदि क्रियते राजा तत्किं नाश्नात्युपानहम् ॥ ३८

बलावलेपादधुनाऽपि पूर्ववत्प्रबाध्यते तेन जगज्जिगीषुणा ।
सतीव योषित्प्रकृतिः सुनिश्चला पुमांसमभ्येति भवान्तरेष्वपि ॥ ३९

माघस्य

१७ अनिर्वेदः श्रियो मूलमनिर्वेदः परं सुखम् ।
भूयस्तत्र विचेष्यामि न यत्र विचयः कृतः ॥ ४० रामायणे

तदलं प्रतिपक्षमुन्नतेरवलम्ब्य व्यवसायवन्ध्यताम् ।
निवसन्ति पराक्रमाश्रया न विषादेन समं समृद्धयः ॥ ४१
भारवेः

१८ यदेवोपनतं दुःखात्सुखं तद्रसवत्तरम् ।
निर्वाणाय तरुच्छाया तप्तस्य हि विशेषतः ॥ ४२
कालिदासस्य

सुखं हि दुःखान्यनुभूय शोभते घनान्धकारेष्विव दीपदर्शनम् ।
सुखात्तु यो याति नरो दरिद्रतां धृतः शरीरेण मृतः स जीवति ॥ ४३
शूद्रकस्य

१९ यस्यास्ति वित्तं स नरः कुलीनः स पण्डितः स श्रुतवान्गुणज्ञः ।
स एव वक्ता स च दर्शनीयः सर्वे गुणाः काञ्चनमाश्रयन्ते ॥ ४४
भर्तृहरेः

यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः ।
यस्यार्थाः स पुमाँल्लोके यस्यार्थाः स च पण्डितः ॥ ४५
भगवतो वाल्मीकेः

२० दारुभेदनिपुणोऽपि षडंघ्रिर्निष्क्रियो भवति पङ्कजबद्धः ।
बन्धनानि किल सन्ति बहूनि स्नेहरज्जुकृतबन्धनमन्यत् ॥ ४६

सम्पत्सु केलिसदनं व्यसनेषु समाश्रयः ।
कोशो विस्रम्भचर्यासु किं नाम न सुहृन्नृणाम् ॥ ४७ क्षेमेन्द्रस्य

२१ यद्यावद्यादृशं येन कृतं कर्म शुभाशुभम् ।
तत्तावत्तादृशं तस्य फलमीशः प्रयच्छति ॥ ४८ नलचम्प्वाम्

एवं कुकर्म सर्वस्य फलत्यात्मनि सर्वदा ।
यो यद्वपति बीजं हि लभते सोऽपि तत्फलम् ॥ ४९

कन्दुको भित्तिनिक्षिप्त इव प्रतिफलन्मुहुः ।
आपतत्यात्मनि प्रायो दोषोऽन्यस्य चिकीर्षतः ॥ ५०

एतौ सोमदेवस्य

२२ अपि क्रियार्थं सुलभं समित्कुशं जलान्यपि स्नानविधिक्षमाणि ते ।
अपि स्वशक्त्या तपसि प्रवर्तसे शरीरमाद्यं खलु धर्मसाधनम् ॥५१॥

कालिदासस्य

आयुः कामयमानेन धर्मार्थसुखसाधनम् ।
आयुर्वेदोपदेशेषु विधेयः परमादरः ॥ ५२ वाग्भटस्य

२३ अनियतरुदितस्मितं विराजत्-
कतिपयकोमलदन्तकुड्मलाग्रम् ।
वदनकमलकं शिशोः स्मरामि
स्खलदसमञ्जसमुग्धजल्पितं ते ॥ ५३ भवभूतेः

आलक्ष्यदन्तमुकुलाननिमित्तहासै-
रव्यक्तवर्णरमणीयवचःप्रवृत्तीन् ।
अङ्काश्रयप्रणयिनस्तनयान्वहन्तो
धन्यास्तदङ्गरजसा मलिनीभवन्ति ॥ ५४ कालिदासस्य

२४ निवार्यतामालि किमप्ययं वटुः
पुनर्विवक्षुः स्फुरितोत्तराधरः ।
न केवलं यो महतोऽपभाषते
शृणोति तस्मादपि यः स पापभाक् ॥ ५५ कालिदासस्य

गुरोः प्राप्तः परीवादो न श्रोतव्यः कथंचन ।
कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः ॥ ५६

२५ प्रयुक्तसत्कारविशेषमात्मना
न मां परं संप्रतिपत्तुमर्हसि ।
यतः सतां सन्नतगात्रि सङ्गतं
मनीषिभिः साप्तपदीनमिष्यते ॥ ५७

कालिदासस्य

न त्वां करोम्यहं भस्म क्रोधतीव्रेण वह्निना ।
सतां सप्तपदं मैत्रमुषितोऽहं त्वया सह ॥ ५८

विष्णुपुराणे

२६ सत्यमेकपदं ब्रह्म सत्ये धर्मः प्रतिष्ठितः ।
सत्यमेवाक्षया वेदाः सत्येनावाप्यते परम् ॥ ५९

रामायणे

अश्वमेधसहस्रं च सत्यं च तुलया धृतम् ।
अश्वमेधसहस्रेभ्यः सत्यमेवातिरिच्यते ॥ ६०

महाभारते

# NOTES.

## Part First.

### I.

N. B. The Arabic figures refer to the verses in each passage.

This is a story told by Kaṇika, the Indian Machiavelli, to Dhṛitarāshṭra.

2 कृतप्रज्ञः=कृता ( संस्कृता ) प्रज्ञा यस्य. बभ्रुः A mongoose.

3 अमन्त्रयन् should be अमन्त्रयन्त, as मन्त्र् takes the Atmanepada only.

4–5 Supply हन्तुं after शक्यते. Supply युक्तं after पादैः. It is an example of the sûtra 'इत्थंभूतलक्षणे' II. 3. 21 for which see Apte's Guide Art. 56.

6–7 समाहिताः (*past pass. part.* of धा *with* सम् and आ ) calm, intent upon, absorbed in.

9–14 चिन्ता परमा यस्य. काले in good time. प्रबोधितः enlightened.

17 गरमेतन्न रोचते ( मह्यम् ) it is poison; I do not like it.

21 अवलुम्पनम् rushing upon, devouring. पिशिताशनः subsisting on flesh.

### II.

1–3 कान्यकुब्ज is modern Kanoj. मरुधन्वसु *loc. plu.* of मरुधन्वन् *m.* A desert, waterless tract.

5–6 श्रेष्ठभाग् ( श्रेष्ठं भजते इति ) ऋषिः=A sage who practises what is best. पाद्यार्घ्याचमनीयैः—with water for washing the feet, with offerings and with water for rinsing the mouth.

8–10 निष्ठानानि sauces. सूपः broth. गौड्यान्नम् food containing molasses. मैरेयः-यम् A kind of drink. वरासवाः best wines or liquors. अनुत्तम *adj.* ( अविद्यमानं उत्तमं यस्य ) best.

12–13 सुवालधि Having a fine tail ( शोभनः वालधि यस्याः ). शङ्कुकर्णी spike-eared. नन्दिनी A fabulous cow, daughter of सुरभि, yielding all desires ( कामधेनु ).

14–15 अर्बुदम्–A hundred millions. राज्येन in return for my kingdom; see Apte's Guide Art. 51. b.

16–17 तपांसि स्वाध्यायश्च साधनानि यस्य. धृतात्मसु—in those who have curbed their selves.

19–21 प्रतीकाशः resemblance; used at the end of compounds. कशा whip. प्रणुदिता driven. काल्यमाना (*pr. p.* of the passive of कल् 10th *conj.*) being driven forward. हम्भायमाना (*pr. p.* of हम्भाय् an onomatopoetic verb) lowing.

25–26 Construe विश्वामित्रबलैः कशाग्रदण्डाभिहतां; धर्षिता (*past pass. p.* of the causal of धृष्) insulted, handled roughly.

30–32 ऊर्ध्वाञ्चित &c.—ऊर्ध्वं अञ्चिते (arched, curbed) शिरः ग्रीवा च यया. रौद्रं दर्शनं यस्याः. क्रोधेन दीप्तं वपुर्यस्याः.

34–35 आवरणम् cloth, garment. अवाकीर्यत was scattered (*pass. imperfect* of कॄ with अव)· संरब्धैः enraged. विश्वामित्रस्य पश्यतः *genitive abs.*

37–38 भल्लः crescent-shaped arrow. क्षुरः a razor-like barb. वैणवः a bamboo-staff. अपोह्य (Indeclinable *past p.* of ऊह् with अप) having dispelled.

42 स्फीत *adj.* Prosperous. पृष्ठतः कृ not to mind, to pass over, to become careless about.

## III.

1–2 प्रथितं well-known, famous. दुन्दुभिस्वनकल्प (कल्प is used at the end of compounds in the sense of 'a little less than') *adj.* almost like the sound of a kettle-drum.

6–7 Construe पूर्वैः आचरितं पन्थानं अनुगच्छता मया. चरता qualifies मया. पाण्डुरस्या...जरितम्—(my body) has become old under the shade of the white umbrella (one of the insignia of royalty) *i. e.* I have become old and infirm while governing the people.

10–12 अनुमान्य having asked for permission. पुरञ्जय is an *aluk* compound. चन्द्रमिव पुष्येण–the conjunction of the moon and the constellation Pushya is looked upon as very auspicious.

16 अन्या मध्यस्थचिन्ता—The deliberations of a third party (an impartial or disinterested man) are quite different (from the thoughts of an interested party like me). विमर्देन (विवादेन) अभ्यधिकः उदयः यस्याम्.

18–20 विमानः—नम् Palace. समतां गतबुद्धयः—whose thoughts were identical, who were of one and the same mind.

21 अनेकवर्षसाहस्रः One who had lived for many thousands of years. युवराजानम् should be युवराजम्.

29–30 प्रजासुखत्वे In being agreeable to the people. श्लक्ष्ण *adj.* soft, mild.

38 निविष्टम् intent upon. उदारजुष्टम् resorted to by the best men. वरद is addressed to दशरथ.

## IV.

3–5 ऊषरम् a barren spot with saline soil. स्त्रीवाक्यं the words of a woman (here Kaikeyī). प्राकृतं vulgar, unrefined. खरघातिनः (qualifies तस्य) of one who killed the demon Khara.

7 संपृष्टः—supply यदि before संपृष्टः· 'You should point out the faults or merits only when asked (to do so).'

9–10 उपचारः Polite behaviour. सावमर्दं qualifies वाक्यम्.

11–12 Instead of दण्डं प्रसन्नताम्, the order should rather be प्रसन्नतां दण्डम्, as dealing out punishment is the peculiar office of Yama. क्षणदाचर (क्षणदा–निशा)=निशाचर.

21 आनयिष्यामि should be आनेष्यामि.

## V.

1–4 अनेकगन्धानां प्रवहः (stream, flow) यस्मिन्—This qualifies चैत्यप्रासादम् below. गन्धमादनः—नम् Name of a mountain to the east of Meru famous for its fragrant forests. चैत्यप्रासादः a monumental palace. प्रवलेन (coral) कृतं सोपानं (staircase) यस्य. तप्तकाञ्चनस्य वेदिका (a raised seat) यस्मिन्.

5–13 The accusatives समावृताम्, दीनां &c. qualify सीतां in verse 13. विपद्माम् (विगतानि पद्मानि यस्याः) which is bereft of lotus flowers. अङ्गारकः The planet Mars. नक्षत्रराजस्य of the moon. आम्नायानामयोगेन by the absence (or by non-application to) of the study of the Vedas (that are handed down by tradition).

14–15 संस्कारः Polish, grammatical purity. अर्थान्तरं कृताम् conveying a different meaning (other than the one intended). उपपादिन् establishing, justifying.

# VI.

1–5 अस्तः ( thrown ) रक्षोगणः यस्याः. त्रासः apprehension, fear.

10 Construe इदं कार्यं ईषत्कार्यं ( ईषत् 'a little' कार्यं यस्य ) कृतमासीत्—This object had been so far accomplished that only a little remained to be done.

12–15 ममापि should be मह्यमपि, as रुच् governs the dative of the person pleased. वडवामुखः the submarine fire. दद्मि should be ददामि. हरीश्वरः=सुग्रीवः. पुरुषशार्दूलौ refers to रामलक्ष्मणौ. अनवस्थित fickle

16–20 राजस *adj.* dominated by passion. अनीश *adj.* powerless. ईश्वर *adj.* able. ता refers to रामलक्ष्मणौ. रोपदोषेण परीतः ( आवृतः ) आत्मा यस्य. व्यक्तं clearly.

# VII.

1–5 सुनिविष्ट well-arranged. मित्रप्रवादेन ( मित्रस्य इव प्रवादः यस्य ) with one who ( outwardly ) talks like a friend. ज्ञातिः kinsman or kindred; paternal relations. साधन *adj.* one who accomplishes. वैद्य: a learned man ( a rare meaning of the word ). आततायिन् *adj.* a desperado, one who commits a heinous crime.

9–10 सम्पन्नम्—Riches. अभिजातः=प्राप्तः.

11–15 पुष्करम्—a blue lotus. तर्षः thirst. न विद्यते does not stay ( in one flower for a long time ). गृह्य should be गृहीत्वा. Supply यदि before श्रयात्. कुलपांसन bringing disgrace on the family.

17–20 Supply त्वं before न च धर्मपथे स्थितः. सुनीत *adj.* well behaved, civil. अकृतात्मन् *adj.* ignorant. प्रदीप्तं शरणं a house on fire.

*22* रणाजिरम् field of battle. अङ्गणं चत्वराजिरम् Amar. कालाभिपन्नाः subdued or seized by Time ( Death ). परीतकालाः=कालेन परीताः.

# VIII.

3–5 अमर्षात् through impatience. Supply सः ( रामः ) before पृष्ठतः कृतः. सौहृदम् enmity.

12–17 Construe धात्रा ( ब्रह्मणा ) with सृष्टा. वासं is the object of अनुरुध्य ( having practised or adapted oneself to ). कस्य should be कस्मै. यथाशं ( आशामनतिक्रम्य ) is an अव्ययीभाव compound.

18 श्रश्रूणां is to be connected with चरणौ. अविशेषेण without making any difference between कौसल्या on the one hand and सुमित्रा and कैकेयी on the other.

## IX.

1–5 विदिशा Name of a city, capital of the country called दशार्ण; it is modern Bhilsa. अनन्यलभ्य—not accessible to any one else.

6–10 मूषकलिप्सया with the desire of seizing mice ; construe this word with प्रभ्रमति above. येऽन्येऽपि—These words refer to the three, *viz.* mouse, mongoose and owl. तत् refers to यवक्षेत्रम्. निभृतागत: who came unperceived.

12 दृष्टः मार्जारबन्धः याभ्याम्. विघ्न frightened.

21–24 कटकटायद्भिः making a grating sound (an onomatopoetic word). चिरमकरोत् delayed. कालयुक्त्या=कालये

## X.

Sherlock Holmes is the ideal detective of the famous novelist, Dr. Conan Doyle.

1–5 श्रावस्ती name of a town in Northern Kos'ala. शूद्रान्नभुक्—subsisting on food given by S'ūdras. तेन in verse 3 refers to वणिजा. अन्यैः वणिग्वरैः (आपूर्यत) he (the Brahmin) was enriched by other prominent merchants. दीनारः A particular golden coin (compare the word 'Denarius' for a Roman coin). खातम् excavation, hole. व्यात्त (*past p. p.* of दा with वि and आ) opened.

6–9 तं in the second half of verse 6 qualifies स्ववृत्तान्तं. तीर्थम् a descent into a river (Marathi घाट). अर्थमात्रा property.

15–18 शिरोऽर्तिः Headache. व्यपदेशः Pretext. The words अद्य द्वितीयं दिनं are parenthetical. नागबला is a medicinal herb.

22–24 प्रतिपद्य having admitted. हारितप्राप्तान् (आदौ हारिताः पश्चात् प्राप्ताः तान्) lost but recovered. नीतं in verse 24 qualifies द्विजार्थं (द्विजस्य अर्थम्).

## XI.

1–5 अर्थदूषणम् extravagance, waste. कामजं qualifies व्यसनम्. अभीक्ष्णम् *adv.* repeatedly. द्विषतां *geni. pl.* of द्विषत्.

